अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६१.

# सिद्धान्तसिद्धाञ्जनं

श्रीकृष्णानन्दसरस्वतीप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

**चतुर्थो भागः ।**




तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोल्लम्बाब्दाः १०९३, क्रैस्ताब्दाः १९१८.

# विषयानुक्रमणी।


| विषयः | पृष्ठम् |
| --- | --- |
| अविद्याश्रयत्वाक्षेपः | १ |
| आवरणाक्षेपः | २ |
| अविद्यास्वरूपाक्षेपः | ३ |
| अनिर्वचनीयत्वाक्षेपः | ४ |
| अख्यात्यन्यथाख्यातिसत्ख्यातिषु ख्यातिबाधौ | ५ |
| अख्यातिनिरासः | ,, |
| अन्यथाख्यातिनिरासः | ७ |
| आरोप्यस्यान्यत्र सत्त्वे माननिरासः | ,, |
| परमतम् | ,, |
| सत्ख्यातेरन्यत्रान्यथाख्यातेरवर्जनीयत्वं | ८ |
| अन्यथाख्यातिस्थापनम् | ९ |
| अनिर्वचनीयहेत्वाक्षेपः | ,, |
| त्रिवृत्करणश्रुतिसादृश्यन्यायाभ्यां शुक्त्यादौ रजताद्यवयवसत्त्वम् | १० |
| सत्ख्यातौ भ्रमबाधादि | ११ |
| शुक्तिरूप्यादेः पुरुषमृगवदजात्यन्तरत्वं | १२ |
| स्वप्नादिसत्यत्वं | ,, |
| सिद्धान्तोट्टङ्कनम् | १३ |
| अविद्यायां प्रत्यक्षम् | ,, |
| अविद्यायामनुमानम् | १४ |
| तमसो भावत्वम् | १५ |
| अज्ञाने श्रुतिः | १६ |
| अज्ञाने अर्थापत्तिः | ,, |
| अज्ञानस्य ज्ञानाभावरूपत्वनिरासेन भावरूपत्वकथनम् | १७ |
| भावरूपज्ञानाक्षेपः | १८ |
| अज्ञानानुमानदूषणम् | २२ |
| भावरूपाज्ञानस्यागमानवगतत्वम् | २४ |
| अज्ञानार्थापत्तिनिरासः | २६ |
| इतिहासपुराणयोर्ब्रह्माज्ञानवादाभावः | २७ |
| सिद्धान्तः अविद्याश्रयः | ,, |

| विषयः | पृष्ठम् |
|---|---|
| अविद्यावरणम् | ३० |
| परमते अज्ञानाविभ्रमानुपपत्तिः | ३१ |
| असाधारण्याविवेकः | ३३ |
| अनवस्थोद्धारः | ,, |
| अनिर्वचनीयत्वपोपात्तिः | ३५ |
| जगद्ब्रह्मणोर्बाध्यत्वाबाध्यत्वे | ,, |
| अन्यथाख्यातिमते ख्यातिबाधायोगः | ३७ |
| अनिर्वाच्ये ख्यातिबाधोपपत्तिः | ३९ |
| दोषस्य भ्रमाहेतुत्वम् | ४० |
| अपरोक्षभ्रमस्यानिर्वाच्यविषयत्वं | ४२ |
| अनिर्वाच्ये बुद्ध्याद्यसङ्करः | ४३ |
| सत्ख्यातौ बाधानुपपत्तिः | ,, |
| भ्रमत्वायोगः | ४४ |
| शुक्त्यादौ रजतादिसत्त्वानिरासः | ४६ |
| स्वप्नादिषु परोक्तोपपत्तिदूषणम् | ५२ |
| अविद्याया अप्रामाणिकता | ५५ |
| न जानामीत्यभावाविषयता | ५६ |
| परमतम् | ५७ |
| तिरोधानम् | ६० |
| अविशदावभासः | ,, |
| अविद्यानुमाने पक्षनिष्कर्षः | ६१ |
| साध्योपपादनम् | ६४ |
| हेतुनिष्कर्षः | ६६ |
| सुखदुःखादेर्ज्ञानत्वायोगः | ७० |
| भावरूपाज्ञानानुमानान्तराणि | ७१ |
| अज्ञानभेदाभेदचिन्ता | ,, |
| अविद्यायां श्रुतिः । अनृतशब्दार्थः | ७३ |
| नासदासीदित्यादिश्रुत्यर्थः | ७६ |
| मायापदवृत्तिनिमित्तम् | ७७ |
| अज्ञाने श्रुत्यन्तराणि | ७८ |
| अज्ञानेऽर्थापत्तिः | ७९ |
| न किञ्चिदवेदिषमिति प्रत्यवमर्शस्य अज्ञानविषयत्वम् | ८० |
| संस्कारोपपादनम् | ८२ |
| अज्ञानस्य कल्पकान्तराणि | ,, |
| अज्ञाने स्मृतिपुराणसम्मतिः | ८४ |

| विषयः | पृष्ठम् |
| --- | --- |
| भावरूपाज्ञाने सूत्रकारसम्मतिः | ,, |
| तद्गुणसारत्वादितिन्यायविचारः | ८५ |
| आरम्भणाधिकरणविमर्शः | ८६ |
| श्रुतेस्तु शब्दमूलत्वादिति न्यायाविरोधः | ८८ |
| महतः परमव्यक्तमितिश्रुत्यर्थः | ८९ |
| अजामेकामिति मन्त्रार्थः | ९० |
| भावरूपाज्ञाननिगमनम् | ९४ |
| अज्ञाने परकीयचोद्यसमाधिः | ,, |
| निवर्तकानवस्थोद्धारः | ९५ |
| विदुष उत्क्रान्त्यादिचिन्ता | ९७ |
| अर्चिरादिपर्वणा गतस्य ब्रह्मप्राप्तितदनुभवप्रकारः | १०० |
| परविद उत्क्रान्त्याद्यनपेक्षा देशविशेषे भोगाभावश्च | १०३ |
| स्वमतम् | १०४ |
| ब्रह्मणि कलाविलये श्रुत्याद्यविरोधः | १०७ |
| विदुष उत्क्रान्तिगत्यादिनिषेधसमर्थनम् | १०९ |
| स एनान् ब्रह्म गमयतीति श्रुतेः सगुणब्रह्मपरत्वम् | ११३ |
| अनावृत्तिश्रुतिविचारः | ११५ |
| पञ्चाग्निविदामब्रह्मवित्त्वम् | ११७ |
| ब्रह्मविद्यासाध्यविमर्शः | ११८ |
| अविद्याद्यनर्थनिवृत्तेर्ब्रह्मविद्यासाध्यत्वम् | ११९ |
| परमते ब्रह्मविद्यासाध्येऽनुपपत्तिः | १२१ |
| सर्वात्मभावे दोषपरिहारः | १२२ |
| ब्रह्मविचारप्रतिज्ञासमर्थनम | १२३ |
| अधिकरणपूर्वपक्षः | १२४ |
| अधिकरणसिद्धान्तः | १२६ |

# शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ४ | १४ | स्तते | स्तवे |
| २२ | ३ | अनन | अन |
| ४२ | ६ | परो | अपरो |
| ६७ | ७ | सिद्धः | सिद्धिः |
| ७० | १२ | त्व | त्वा |
| ७२ | ७ | वेदना | यद्यना |
| ७५ | १७ | स्वस | खस |
| ८३ | २६ | दिनोपा | दीनोपा |
| ९० | १३ | दे रथा | देरर्थो |
| १०५ | १२ | त्वे | त्ये |
| १०७ | १६ | मू | भू |
| १०८ | १० | त्ता | दा |
| ,, | १६ | म्य | म्या |
| ,, | २४ | प्या | प्मा |
| १०९ | ७ | त्क | त्का |
| ११५ | ३ | ने च | किञ्च |
| ११९ | १९ | द्ध | द्धे |
| १२२ | २७ | सार | संसार |

# पाठभेदः ।

| पृष्ठे. | पङ्क्तौ. | क. ख. ग्रन्थपाठः. | ग. ग्रन्थपाठः. |
|---|---|---|---|
| ६६ | १९ | क्षतानु | क्षावच्छेदकानु |
| ६७ | १२ | विरुद्धो | सिद्धो |
| ,, | १३ | आपद्येत । | विरुध्येत् । |
| ६८ | ८ | नाना | ना |
| ७३ | २४ | शक्तिः | शक्तिप्रसङ्गात् । |
| ७५ | २ | दविद्याज्ञानमे | दनृतज्ञानमे |
| ८६ | ४ | तद्वृत्त | तदवमार्शित्वं तद्वृत्त |
| ९४ | १३ | षा साशे | षाशे |
| ,, | १६ | धविकल्पमयेन त | धाधिष्ठानगोचरेण त |
| ९५ | ६ | घनात्म | संहतात्म |
| ,, | ११ | चापारमार्थ्यस्य | चापरमार्थस्य |
| १०८ | ६ | शङ्कितं | शक्यं |
| ११५ | २३ | म्नान | म्नाय |

# सिद्धान्तसिद्धाञ्जनं

## श्रीकृष्णानन्दसरस्वतीप्रणीतम् ।

---

### चतुर्थो भागः ।

---

#### अविद्याश्रयत्वाक्षेपः ।

अत्राह — यत् तावदुपगम्यते — स्वयम्प्रकाशसत्तामात्रे निर्विशेषब्रह्मात्मनि स्वरूपतिरोधानेनेशित्रीशितव्याद्यनन्तविकल्पकल्पनामूलमनाद्यविद्यादोष इति । तत्र तावदेष दोषो न निराश्रय इति सम्भवत्युपगम्यते वा । आश्रयश्च न तावज्जीवः, तस्य लब्धात्मकाविद्याधीनात्मलाभत्वोपगमादन्योन्याश्रयापत्तेः । न च बीजाङ्कुरन्यायः, उभयोः स्वरूपानादित्वोपगमात् । अनादित्वेनेतरेतराधीनस्थितिकत्वमनयोरिति चेद्, एवमपि तदुभयाध्यासाधिष्ठानं मृग्येत । नापि ब्रह्म । स्वयम्प्रकाशचिद्रूपत्वेनाविद्याविरोधित्वात् । विषयसंवेदनवत् । नहि कदापि विषयसंविदज्ञातेति । अविद्या हि वस्तुस्वरूपावभासबाध्या । निर्विशेषात्मवादे विषयवैषम्याभावे सति प्रमाणज्ञानत्वस्याप्रयोजकत्वात् । नहि भास्वरद्रव्यमात्रज्ञानमागामिकमपि शुक्तित्वाज्ञानं रूप्यभ्रमं वा विरुन्धे । न चायं देवः सोऽयमित्यभिज्ञाप्रत्यभिज्ञयोरभेदविषयावैषम्येऽपि हेतुवैषम्यादेव प्रत्यभिज्ञानं भेदभ्रमादिविरोधि नाभिज्ञानमिति दृष्टमिति शङ्क्यम् । प्रत्यभिज्ञाने देशकालद्रव्यविशिष्टविषयवैषम्योपपत्तेः । तद् यदि भ्रमसहकारातिरिक्ताकाराविषयं प्रमाणज्ञानमज्ञानविरोधि, ब्रह्मणः स्वरूपज्ञानमपि तथैव । यदि चेदमविरोधि, प्रमाणज्ञानमपि तथैव स्यात् । अपिच प्रमेयत्वे ब्रह्मणोऽचिद्रूपत्वं तव प्रसज्येत । यथाह नाथमुनिः —

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने ॥

G. P. T. 3431. 500. 6-1-1093. B

ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम् ।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं तदुक्त्यैव प्रसज्यते ॥"

इति । अतः स्वयम्प्रकाशब्रह्मणोऽननुभाव्यत्वोपगमाद्, अकामेनापि स्वरूपज्ञानमेवाविद्याविरोधि वाच्यम् । शुक्त्यादौ हि न प्रमाणज्ञानत्वेन भ्रमादिनिवर्तकमिति तदपेक्षा । नाप्यधिष्ठानं तद्भ्रमाविरोधीति, नाप्यधिष्ठानत्वं भ्रमादिविरोधिप्रमाणज्ञानविषयत्वनियतमिति । किन्तु जडत्वेन स्वयाथात्म्यावभासे स्वयमसमर्थमिति । स्वतोऽन्यतो वा स्वरूपावभासे विषयसंविदादौ सुखादौ चाज्ञानाद्यभावात् । अधिष्ठानत्वं चाप्रयोजकं, प्रमाणज्ञानविषयत्वे जडत्वस्योपाधित्वात् । अन्यतः स्वतो वा स्वरूपावभासे सति शुक्तेरात्मनो वाधिष्ठानत्वायोगाच्च । विकल्पमिथ्यात्वज्ञानमेव प्रमाणजमज्ञानविरोधीति चेद्, न । समान एव विषये ज्ञानाज्ञानविरोधेन विकल्पसत्यत्वरूपाज्ञाननिवृत्तावप्यतद्विषयब्रह्माज्ञाननिवृत्त्ययोगात् । अद्वितीयस्वरूपस्य स्वतः सिद्धेः, ब्रह्मणः साद्वितीयत्वरूपाज्ञानानुपपत्तेश्च । न चाद्वितीयत्वं तद्धर्मः, येन न स्वतः सिध्येत् । दृगात्मनि दृश्यधर्मानभ्युपगमात् । तस्माद् ब्रह्म नाविद्याश्रयः ॥

---

## आवरणाक्षेपः ।

अपिच नाविद्यया[1] ब्रह्मस्वरूपप्रकाशावरणमुपपद्यते । तद्धि नोदयप्रतिबन्धः प्रकाशस्य नाशो वा अनाद्यनन्तप्रकाशमात्रात्मवादे सम्भवति । अपिच प्रकाशमाने वात्मन्यप्रकाशमाने वा नाविद्यावरणं सेद्धुमर्हति, स्वतोऽन्यतो वा विषयस्वरूपावभासस्य तद्विरोधित्वाद्, निर्विषयाविद्यानवभासात् । अस्माकं पुनरात्मनो यद् रूपं प्रकाशते न तस्यावरणम् । किन्तु नित्यत्वज्ञत्वाणुत्वनिरवयवत्वादिस्वरूपातिरिक्ताकारान्तरस्य । तज्ज्ञानं चागमजं देहाद्यात्म[2]विभ्रमविरोधीत्युपेयते । न च ज्ञानमात्मनोऽसाधारणाकारोऽपि तत्त्वेन स्फुरितं, येन भ्रमो विरुध्येत । तथैव हि शुक्तित्वादिविशेषदर्शनं

---

१. 'द्या', २. 'त्मभ्र' ख. पाठः.

भ्रमविरोधि दृष्टम् । तच्च प्राक् तिरोहितम् । ज्ञानद्रव्यस्य हि धर्मभूतस्य न सत्तयैव स्वप्रकाशत्वमुपेयते, किन्तु स्वप्रकाशनरूपस्वप्रसरणार्हत्वेन । तस्य हि प्रसरो नाम स्वस्वविषयप्रकाशरूपमवस्थान्तरमुपगम्यते हैतुकं कादाचित्कम् । तदभावश्चाविद्यया कर्मणा तस्य सङ्कोचो नामावस्थान्तरम् । तदेव तिरोधानं धर्मभूतज्ञानेऽपीति न स्वरूपनाशप्रसङ्गः । न चैवं प्रकाशमात्रात्मवादे सम्भवतीति स्वरूपनाश एव तिरोधानं स्यात् । अतो न ब्रह्माविद्याविषयः ॥

---

## अविद्यास्वरूपाक्षेपः ।

अपिच सा न तावत् परमार्थसती, अद्वैतहानेरनभ्युपगमात् । नापि काल्पनिकी, द्रष्टृदृश्यतदवच्छिन्नदृशीनामन्यतमत्वे केवलदृशिरूपत्वे वा कल्पनामूलदोषान्तरापेक्षायामनवस्थानाद्, माध्यमिकपक्षप्रसङ्गाच्च । केवलदृशि भेदानङ्गीकारात् ।

ननु जीवाज्ञानवादे अविद्याया जीवो जीवादविद्येति प्रवाहानादित्वान्नानवस्थादोषः । ब्रह्माज्ञानवादे च स्वरूपानादित्वेन हेत्वनपेक्षत्वान्नानवस्थैव । विकल्पासहत्वेन दुर्घटत्वं चाविद्याया भूषणं न तु दूषणम्, अपरमार्थस्योपपत्तिनिरपेक्षत्वात् । न खल्वैन्द्रजालिकप्रासादादिनिगरणमुपपत्त्योपपाद्यते । यथा चाहुः—

> "योग्यायोग्यव्यपेक्षेयं मानव्यवहृतौ भवेत् ।
> कल्पनामात्रनिष्पत्तेर्नापेक्षाज्ञानभूमिषु ॥"

इति । अविद्याया दोषस्य स्वपरनिर्वाहकत्वेनापेक्ष्यान्तराभावाच्च नानवस्थेति ।

अत्रोच्यते—प्रवाहानादित्वं जीवनित्यत्वादिविरोधात् प्रतिवक्तव्यम् । स्वरूपानादित्वेऽपि काल्पनिकत्वे जीवादिवदेव कल्पनामूलदोषान्तरापेक्षयानवस्थैव । अन्यथा काल्पनिकस्यैव स्वरूपानादितयाधिष्ठानान्तरनिरपेक्षस्य सर्वकल्पनाधिष्ठानत्वसम्भवेन शून्यपक्षस्याप्युपपत्तेरधिष्ठानानवस्थापत्त्या तत्पारमार्थ्यसाधनं न स्यात् । एतेन प्रवाहानादित्वपक्षोऽपि व्याख्यातः । दुर्घटत्वं चायुक्तमविद्यायाः । यदनृतं तन्मूलभूतदोषापेक्षमित्युपपत्तिनिरपेक्षत्वे प्रपञ्चकल्पनस्यापि हेतुरविद्या दोषो न कल्प्येत । अपिचैवं यदनृतं तत् सा

ष्ठानमित्युपपत्तिनिरपेक्षतया कल्पितस्यैवाधिष्ठानत्वे, शून्यपक्षोऽपि व्यवतिष्ठेत। पारमार्थ्यप्रयुक्तोपपत्तिनिरपेक्षत्वेऽप्यपारमार्थ्यप्रयुक्तोपपत्तिदोषमूलत्वं साधिष्ठानत्वं चापेक्ष्यत एवेति चेद्, अविद्याकल्पनेऽपि तथेत्यनवस्थैव। अपिचैवमविद्या सत्यामपि विद्यायामवतिष्ठेत, मुक्तान् ब्रह्म चावृणुयात्। विरोधान्नावतिष्ठते। बाधितत्वान्नावृणुत इति चेद्, एवमुपपत्त्यनुवर्तिन्यविद्येति निरुक्तानवस्थादिदूषणमेव। दोषस्य स्वपरनिर्वाहकतया दोषान्तरनिरपेक्षत्वे, रागादिदोषस्याविद्यामूलत्वं न कल्प्येत। अपिचापरमार्थाधिष्ठानस्यापि स्वपरनिर्वाहकतयाधिष्ठानान्तरापेक्षा न स्यात्। अधिष्ठानारोप्यभेददर्शने तुल्यं दोषारोप्यभेददर्शनं तिमिरेन्दुभेदादौ। तदिदमुदितं,

> "स्वरूपानादित्वस्वपरघटने दुर्घटतया
> प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः।
> असत्याविद्याया वदितुमनवस्थापरिहृतौ
> मतास्तेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ॥"

इति। तदेवमविद्यास्वरूपानुपपत्तिः॥

---

**अनिर्वचनीयत्वाक्षेपः।**

किञ्चास्याः काल्पनिकत्वमनिर्वचनीयत्वम्। सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं नीलं पीतमिति। तत्रास्ति नास्तीति सदसदाकारमवभासते। सदसद्विलक्षणं तु विषय इत्युपगमेऽतिप्रसङ्गः। सदसद्विलक्षणत्वप्रतीतेरेवान्ततः सदसद्विषयत्वापत्तेः, एकस्य सदसत्त्वविरोधात्। ख्यातिबाधाभ्यां शुक्तिरूप्यादेरुभयवैलक्षण्यमवश्यमुपेत्यमिति चेत्। न। सदसतोरेवान्योन्यवैलक्षण्येनैकस्य तद्विरोधतौल्यात्। इष्टं तु सदसदात्मकत्वमेकस्येति विशेषः। यथा संवित्सिद्धौ—

> "नासत् प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत्।
> प्रतीतेरेव सत् किं न बाधन्नासत् कुतो जगत्॥"

इति। अन्यथा विरुद्धाकारधीभ्यामुभयवैलक्षण्यकल्पने ब्रह्मणो भेदस्य संविदो वा सविशेषत्वनिर्विशेषत्वसुनिरूपत्वदुर्निरूपत्वनित्यत्वानित्यत्वादिपक्षविरोधादुभयवैलक्षण्यप्रसङ्गे सिद्धान्तविरोधः॥

---

**अख्यात्यन्यथाख्यातिसत्ख्यातिषु ख्यातिबाधौ ।**

अथ सदसत्त्वे समबले तावदेकस्य विरुद्धे । अन्यथा तत्तदधिगमेऽपि प्रवृत्तिनिवृत्त्यव्यवस्थाप्रसङ्गात् । तथाच ख्यातिबाधान्यथानुपपत्तिः । न । अख्यातिमते सत एवागृहीतभेदा ख्यातिर्भेदग्रहश्च बाधः । बाध्या च प्रवृत्तिः । प्रतिबध्येत्यर्थः । अन्यथाख्यातिमते चान्यत्र सत एवान्यत्र ख्यातिः । व्यवहितावभासे अनिर्वचनीयावभासे वा दोषस्यादृष्टसामर्थ्यकल्पनाविशेषात् । प्रतीतविरुद्धाकारवैलक्षण्यमेकस्याविरुद्धमिति कल्पनं तु तवाधिकम् । तत्राभावाच्च बाधः । सत्ख्यातिमते च शुक्त्यादौ रजतादेः सत एव ख्यातिः । शुक्तिभूयस्त्वसाकल्यग्रहो बाधः । बाध्या च प्रवृत्तिः । एवमन्यत्रापि तदन्यथोपपत्तिरूहनीयेति ॥

---

**अख्यातिनिरासः ।**

अथोच्येत — अस्ति शुक्ताविदं रजतमिति ख्यातिः । नासावख्यातिः । सत्यरजतज्ञानाविशेषात् । शुक्तिरजतयोरिमे रजते इत्येकस्यैव ज्ञानस्यांशभेदेन वैरूप्यकल्पनानौचित्यात् । तत्रापि प्रवृत्तेर्विशिष्टज्ञानाधीनत्वात् । विद्यमानभेदाग्रहादेव तत्र प्रवृत्तौ परत्राप्यविद्यमानभेदाग्रहादेव स्यात् । निवृत्तिश्च विद्यमानसंसर्गाग्रहादविद्यमानसंसर्गाग्रहाद् वेति कृतं सर्वत्र विशिष्टज्ञानेन, प्रवृत्त्यादिसंवादविसंवादयोरपि भेदादिसदसत्त्वनिबन्धनत्वोपपत्तेः । यद्यपि सुप्तिव्यावृत्तोपस्थितेष्टभेदाग्रहस्य प्रवर्तकत्वे रजते सैवोपस्थितिः प्रवर्तिकेति फलति । तथापि प्रवृत्तित्वावच्छिन्नकारणमेकरूपं युक्तम् । ननु स्वतन्त्रेष्टोपस्थितिरेव । सत्यम् । सा तु प्रवृत्तिविषयेणापि विशेषणीया । अन्यथातिप्रसङ्गात् । एवं हीष्टप्रवृत्तिविषयविशिष्टज्ञानं प्रवृत्तिमात्रे, तत्तत्प्रवृत्तौ च तत्तद्विशिष्टज्ञानमिति कार्यकारणव्यवस्थालाघवं प्रवृत्तौ संवादस्य ज्ञान इव विषयाबाधनिबन्धनत्वेन, सत्यप्रवृत्तौ विशिष्टप्रमाकारणत्वाकल्पनात् । अन्यत्र च प्रवृत्तिमात्रे स्वतन्त्रेष्टोपस्थितिः, सत्यप्रवृत्तौ प्रवृत्तिविषयविशिष्टज्ञानं तद्विशेषे तद्विशेष इति कार्यकारणव्यवस्थागौरवात् । अपिच नेदं रजतमिति रजते बाध-

१. 'अथा' ख. पाठः.

विभ्रमे ससंसर्गाग्रहान्निवृत्तिः असंसर्गाग्रहात् प्रवृत्तिश्चेति प्राप्ता पुरुषस्य व्याकुलता । संसर्गाग्रहासंसर्गाग्रहरूपसादृश्यात् खलु विभ्रमतः प्रवृत्तिनिवृत्ती इष्येते । अन्यथा गौरवात् । प्रवृत्त्या चाभेदव्यवहारोऽपि व्याख्यातः ।

अपिचाख्यातिमते स्वतोऽर्थतश्चागृहीतभेदे ज्ञानद्वये भ्रमप्रसिद्धिसम्भवेऽपि बाधानुपपत्तिः, विषयस्य ज्ञानस्य वा बाध्य[1]स्याभावात् । न चेह शुक्तितत्त्वज्ञानेन रजतभेदाग्रहो बाध्येत, तेन तस्य सहभावात् । न च सर्वत्र तद्रूपज्ञानमितरभेदग्रह एवेति न सहभावः, प्रतियोगिज्ञानादिसापेक्षत्वनिरपेक्षत्वाभ्यां तदनेकत्वात् । शुक्तौ रजतं नेति युगपदपर्यायविषयत्वानुभवाच्च । वस्तुरूपस्यैव प्रतियोगिनिरूप्यत्वमपरो विशेषः द्रव्यादेरिव गुणसमवायित्वादीति चेद्, एवमपि न शुक्तिज्ञानमेव भेदाग्रहं बाधेत, प्रतियोगिनिरूप्यरूपभेदज्ञानस्यैव तद्विरोधित्वात् । उपस्थितरजतभेदाग्रहे सति शुक्तित्वज्ञानं तद्भेदग्रहनान्तरीयकतया भेदाग्रहबाधकमिति चेत् । हन्तैवं भेदग्रह एव भेदाग्रहबा[2]धक इत्यायातम् । ततश्च रजतभेदग्रहो रजत एव तद्भेदाग्रहं बाधत एवेति भ्रमतत्त्वज्ञानयोर्बाध्यबाधकत्वव्यवस्था भज्येत । ननु नेदं रजतमिति रजते न रजतभेदग्रहः, किन्तूपस्थितरजतभेदस्य भेदाग्रह एवेति चेद्, एवमपि रजतभेदज्ञानं तदज्ञानं[3] बाधितुमर्हति । सत्यमेवं, तथाप्युपस्थितभेदाग्रहविषये तद्भेदग्रहो बाधकः, तच्च तत्त्वज्ञानं, बाध्यस्तु भ्रम एवेति व्यवस्थेति चेत् । किमेवंग्रहाभावोऽपि सविषय इष्यताम्, तद्भेदग्रहविषयत्वमेव तत्रोपचर्यते, प्रतियो[4]गिना सम्बन्धो ह्यभाव उपचरितव्य इति चेद्, एवं तर्हि रजते रजतभेदाग्रहमिच्छताकामेनापि रजतभेदग्रहविषयत्वमुपेतव्यम् । तद्विरोधितया च तत्र तद्भेदाग्रहनिवृत्तौ भ्रमतत्त्वज्ञानबाध्यबाधकभावाव्यवस्थै[5]व वेति । नापि रजतार्थिप्रवृत्तिरेव बाध्या, वीतरागस्य तदप्रसक्तौ शुक्तितत्त्वाज्ञानस्य रजतभ्रमाबाधकत्वप्रसङ्गात् । तदर्थिप्रवृत्तिनिरोध्यनिष्टदर्शनादौ बाधकत्वा[6]प्रसिद्धेश्च । नहि 'न सुरां पिबेदि'ति निषेधज्ञानेन प्रवृत्तिनिरोधे बाधप्रसिद्धिः । अत एव नाभेदव्यवहारोऽपि बाध्यः । मूकादेरव्यपदेश्यरूपभेदविभ्रमेषु तदप्रसक्तेरिति ॥

---

१. 'ध्याभा', २. 'ध इ', ३. 'नं नाबा', ४. 'गिस', ५. 'स्थैवे', ६ 'त्वासि' ख. पाठः.

**अन्यथाख्यातिनिरासः ।**

अत एव प्रवृत्तिबाधाभ्यामिदं रजतमिति विशिष्टज्ञानमन्यथाख्यातिरिति चेत् । कस्य किमन्यथात्वम् । यदि विषयस्यातद्धर्मस्य तद्धर्मसंसर्गोऽतदात्मनस्तदात्मत्वं वा । तत्सत्त्वे भ्रान्त्यनुपपत्तिः, तदसत्त्वे असत्ख्यातिप्रसङ्गः । रजते रजतत्वसंसर्गः तदात्मत्वं च सदेवेति चेत् । किमायातं भ्रमविषयस्यान्यथात्वे । अथ ज्ञानस्यान्यालम्बनस्यान्याकारत्वं, न खलु घटज्ञानं पटाकारमित्युपपन्नम् । अन्यालम्बनस्यान्याकारत्वे ज्ञानसाकारवादः प्रसज्येत । निराकारस्यैव तदाकारख्याने चासत्ख्यातिः । रजताकारोल्लेखमात्रं शुक्तिज्ञानस्येति चेद्, न । रजत एव तदुल्लेखे ह्यख्यातिरनुज्ञायेत । शुक्तौ चेदसत्ख्यातिः । न च निरालम्बनमुल्लिख्यमानम् । आकारो नाम गोघटादिरपि हि स्यात् । इदं रजतमिति चासंसर्गाग्रह एव स्यात् । अपिच नान्यत्रान्यत्रैव वा सतोऽन्यत्र ख्यानं ज्ञानस्यान्यथात्वं, खण्डे हि सतो गोत्वस्य मुण्डे दर्शनमन्यथाख्यातिः स्यात् ॥

---

**आरोप्यस्यान्यत्र सत्त्वे माननिरासः ।**

न चेह ख्यायमानस्यान्यत्रैव सत्त्वे मानमस्ति, न तावद् भ्रम एव, पुरःसत्त्वोल्लेखित्वात् । नापि तदन्यथानुपपत्तिः । भ्रमस्य किमन्यथानुपपन्नम् । न स्वरूपं, दोषादिभिरुपपत्तेः । नापि भ्रमत्वं, पौरस्त्ये रजते तज्ज्ञानाभ्रमत्वादिति वाच्यम् । बाधाबाधाभ्यामेव भ्रमत्वाभ्रमत्वव्यवस्थानात् । नापि बाधः, भ्रमविषयनिषेधमात्रोल्लेखित्वात् । नापि तदनुपपत्तिः, स्वरूपं हि तस्य स्वहेतुनिष्पाद्यमुपपन्नम् । न च बाधकत्वं तस्यानुपपन्नं, भ्रमविषये प्रतीतदेशकालावच्छिन्ननिषेधविषयत्वातिरिक्तबाधकत्वाभावात् । सति विषये तत्र निषेधोल्लेख एवायुक्त इति चेद्, एवं हि तत्र निषेधोऽपि स्यात् । तस्य नान्यत्र सत्त्वम् । अत एव प्रतिपन्नोपाधावभावप्रतियोगि तन्मिथ्येति गीयते । तान्त्रिकस्यापि हि तत्रैव सतो रजतस्य शुक्तित्वमेव निषेध उपगम्यते ॥

---

**परमतम् ।**

अपर आह—नान्यत्रैव सत्त्वमिह बाधादवधार्यते, भ्रमबाधितस्य सत्यरजतस्याप्यत्रासत्त्वनिश्चयप्रसङ्गात् । नापि प्रवृत्तिबाधात्, प्रतिबद्धानलस्य

दाहादिप्रवृत्तिबाधेनासत्त्वनिश्चयप्रसङ्गात् । नापि रजतग्राहिप्रमाणात्, तस्य हट्टादौ रजतसत्तामात्रविषयस्य भ्रमविषयैक्यानवगाहित्वात् । अत्रैव सतो बाधायोगादन्यत्राप्यसतः ख्यानायोगाच्चान्यत्रैव सत्त्वमवधार्यत इति चेद्, न । असत्ख्यानायोगस्य सम्बन्धे परित्यागात् । रजते सन्नेव रजतत्वसम्बन्धः शुक्तौ भासत इति चेत् । स यदि सम्बन्धान्तरेण, अनुभवविरोधः, सम्बन्धद्वयानवभासात् । असत्ख्यानं च, तस्य क्वचिदप्यसत्त्वात् । अथ सम्बन्धान्तरमन्तरा रजतत्वसम्बन्धस्य शुक्तिनिरन्तरभानमात्रमुच्येत, तदिदं रजतस्यैव स्यादिति नान्यथाख्यातिः । रजतोपायान्यत्वे सति तदर्थिप्रवृत्तिविषयत्वेन शुक्ते रजतज्ञानविषयत्वं च दुस्साधं, सत्यप्रवृत्तेरेव प्रवृत्तिविषयेष्टतावच्छेदकवैशिष्ट्यज्ञानसाध्यत्वात् । शुक्तिर्न रजतत्वविशिष्टावभासा, शुक्तित्वात् , सम्मतवदिति प्रतिरोधाच्चेति । तदेवं नान्यथाख्यातिरुपपद्यते । नापि बाधः । नहि हट्टरजतमिह प्रतीतं प्रतिषिध्यते, तदिदं नेत्यप्रतीतेः । तदेव सामान्यावच्छिन्नं प्रतियोगितयोल्लिख्यत इति चेद्, न । प्रतिषेधप्रत्ययस्य प्रतिपन्नविशेषालम्बनत्वात् । नहि रजतसामान्यं भ्रमविषयः, विशेषानुभवात् । न खलु परोक्षे रजतमात्रे चतुरश्रत्वादिविशेषविभ्रमः, येन तदेव तेनापि विशेषेण[१] प्रतियोगिबुद्धावुपतिष्ठेत । अपरोक्षो हि भ्रमो न स्यात् ॥

---

**सत्ख्यातेरन्यत्रान्यथाख्यातेरवर्जनीयत्वम् ।**

सत्ख्यातिमते च भ्रमप्रसिद्धिबाधाद्य[२]नुपपत्तिरित्यतो भ्रमबाधान्यथानुपपत्त्या सदसदनिर्वचनीयं रजतमिति ।

मैवम् । सत्ख्यातेरन्यत्रान्यथाभानस्यावर्जनीयत्वात् । अन्यथा भ्रमबाधप्रवृत्तीनामनुपपत्तेः । कल्प्यमानं हीदमनिर्वचनीयं यदि तथैव प्रतीयेत, न भ्रमो बाधः प्रवृत्तिर्वा स्यात् । अथ सदिति, अन्यथाख्यातिरापन्ना । सद्भिन्ने सत्त्वोल्लेखात् । अथ प्रतीतिसत् तदिष्येत, तथापि तस्य तथाभाने न भ्रमादिः । वस्तुसत्त्वभाने चान्यथाख्यानमापन्नम् । असत्ख्यातौ चासदित्येव प्रतीतौ भ्रमाद्यसम्भवः । सत्त्वप्रतीतावन्यथाख्यातिः । आत्मख्यातिवादे च स्वरूपभाने

---

१. 'ष', २. 'द्युप' क. पाठः.

भ्रमत्वादिहानिः । अर्थात्मताभाने चान्यथाख्यातिः । अख्यातिमतेऽपि यदि रजतत्वादिरनिदंगुणः प्रतीयेत, न भ्रमत्वादि । अथेदंगुणत्वेनान्यथाख्यातिः । एवं यदि ज्ञानद्वयं भेदेन प्रतीयेत यदि वैकत्वेनेति ॥

---

## अन्यथाख्यातिस्थापनम् ।

तदन्यत्रैव सताकारेणासन्निकृष्टेनापि दोषादन्यस्य विशिष्टताभानं ख्यातेरन्यथात्वमिति बलादपि मुक्तविकल्पमङ्गीकरणीयम् । अथवा ख्यातेरन्यथात्वमारोप्यविषयसंसर्गाविषयत्वमस्तु । अख्यातेरन्यथाख्यातावैक्यं विशेषः । भेदाग्रहश्च समूहालम्बनात् । इदमो विशेष्यभावे रजतत्वस्य विशेषणभावे च रजतत्वेदंनिरूप्यत्वभेदाग्रहश्च । ततः प्रवृत्तिबाधावुपपन्नौ । बाधोऽपि नेदं रजतमिति सामान्याभावालम्बनः, विशिष्टरूपे[1] शुक्तिशकलादावुपतिष्ठमाने रजतमित्येव सामान्यारोपात् । नहि भ्रमे कश्चिद् विशेष उपस्थितः । उपस्थितचतुरश्रादिविशेषस्य बाधकाले शुक्तीयत्वविवेचनात् ॥

---

## अनिर्वचनीयहेत्वाक्षेपः ।

एवमुपपत्तावत्यन्तादृष्टमनुपपाद्यहेतुकमनिर्वचनीयमयुक्तमाश्रयितुं, ख्यातिबाधानुपपत्तेः । नह्यकार्यमनिर्वचनीयरजतादि, नित्योपलब्धिप्रसङ्गात् । अज्ञातसत्त्वे प्रातिभत्वभङ्गात् । न चाकस्मिकं कार्यम् । तत्र न तावत् तद्विषया प्रतीतिरेव हेतुः, उत्पत्त्यैवाध्यक्षस्य विद्यमानावलम्बनत्वे सर्वसम्प्रतिपत्तेः । अन्यथा निर्विषयोत्पन्नस्य[2] विषयोत्पादने पुनस्तद्विषयीकारे च विरम्यव्यापारकल्पनाप्रसङ्गात् । असत्ख्यातिमत इव निर्विषयादेव प्रवृत्त्यादिसिद्धौ मिथ्यावस्तुक्लृप्तिवैयर्थ्याच्च । नापि दोषसंप्रयोगसंस्काराः, आश्रयवद् विषयेऽपि तेषामर्थकार्यकरत्वायोगात् । संबन्धसाधारण्ये सति व्यवस्थाहेत्वभावात् । न च विषयदोषः सादृश्यादिस्तत्र कार्यहेतुः, तस्य यावद्द्रव्यभावित्वेन कार्यस्य प्रत्ययकालत्वनियमायोगात् । आगन्तोरपि दुष्टेन्द्रियसंप्रयोगस्य[3] मिथ्याज्ञानमात्रोपक्षयात् । अपिच प्रकृतैप्रतिबन्धेन[4] विपरीतहेतुरपि दोषो ज्ञानमर्थं वा प्रतिबध्नन् सजातीयमेव विप-

---

१. 'प', २. 'विशेषोत्प', ३. 'संयो', ४. 'तव' ख पाठः.

रीतं जनयेद्, न विजातीयम्। यथा दावदहनो वेत्रबीजस्य वेत्राङ्कुरकार्यं प्रतिबध्य कदलीकन्दलकार्यं करोति, यथा वा भस्मकः कौक्षेयानलस्य सहजपरिमिताशितपीतपचनकार्यं प्रतिबध्य बह्वशितादिपचनकार्यं प्रसूते, तथा दोषोऽपि विषयस्य प्रमितिं प्रतिबध्नन् भ्रममात्रमादधीतेति न्याय्यम्। संस्कारसम्प्रयोगौ च ज्ञानैकगृहीतान्वयव्यतिरेकौ नार्थकरौ युक्तौ कल्पयितुम्। न च प्रत्यय एव साकारोऽर्थो नाम, अपसिद्धान्तात्। न चान्वयव्यतिरेकावतिलङ्घ्य पापपुरुषसंसर्गिणि पापमिव दुष्टेन्द्रियसंसर्गिणि विषये कश्चिदर्थ आधीयत इति दृष्टान्तमात्रेण शक्यं साधयितुम्, अतिप्रसङ्गात्। दृष्टिविषन्यायेन विषये सम्भवतोऽर्थस्य सर्वोपलम्भप्रसङ्गाच्च। न चाविद्या तदुपादानम्। आगन्तुकदोषादिसहकारिनिरासेन कार्यसातत्यप्रसङ्गात्। मिथ्यात्मनोऽकार्यकरत्वाच्च। अविद्याश्रयानुपपत्त्यादि चोक्तमेव। अपिच प्रत्युत्पन्नं तदनिर्वचनीयं किमिति न घटशब्दप्रत्ययौ भजते। रजतसादृश्यं तु सदृशव्यवहारमादधीते, न रजतव्यवहारम्। अन्यथाख्यातिप्रसङ्गात्। रजतत्वादिजातिः पुनरेका सती न सदसती सम्बद्धुमर्हति, व्यक्तिबाधेऽपि जात्यबाधप्रसङ्गात्। न चायमस्ति प्रत्ययः व्यक्तिर्नास्ति जातिस्त्वस्तीति, सति रजते जातिबाधप्रसङ्गाच्च। असत्या जातेः सद्व्यवहारकरत्वायोगाच्चेत्यलमपरिणतकुतर्ककल्पनेन॥

---

**त्रिवृत्करणश्रुतिसादृश्यन्यायाभ्यां शुक्त्यादौ रजताद्यवयवसत्त्वम्।**

अथवा यथार्थमेव सर्वमपि ज्ञानम्। सति विषये मिथ्यात्वायोगात्। सर्वं हि वस्तु मिथ्यात्मकम्। 'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'ति भूतसंहतिश्रवणात्। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये'त्येकस्य त्रिरूपत्वोदाहरणात्।

"नानावीर्याः पृथग्भूतास्ततस्ते[3] संहतिं विना।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः।
महदादयो विशेषान्ता ह्यण्डमुत्पादयंस्ततः॥"

इत्यादिस्मरणात्। 'त्र्यात्मकत्वात् तु भूयस्त्वात्' (ब्र० ३.१.२) इति सूत्राच्च। तदेवं सति तेजःप्रायरूप्यांशः शुक्तावपि सेत्स्यति। भूतान्तरे शुक्तिरूपपरि-

१. 'षयन्या', २. 'त र', ३. 'ग' ख. पाठः.

णामिनि तदनुगतभूतान्तरस्य तेन सह रजतपरिणामसम्भवात् । 'सोमाभावे पूतीकानभिषुणुयादि'ति सदृशप्रतिनिधिशास्त्रं च पूतीकेषु सोमावयवसत्त्वनिबन्धनम् । व्रीह्यभावे नीवारप्रतिनिधाने व्रीहित्वजात्यवच्छेदनीयावयवसद्भावो निबन्धनमित्येवं सदृशे सदृशान्तरानुगमस्य न्यायविद्दर्शनात् । प्रत्यक्षं च शुक्तौ रूप्यसादृश्यं तदेकदेशान्वयलक्षणम् । तस्मादस्ति शुक्तौ रूप्यान्तर इव रूप्यावयवसद्भावः ॥

---

## सत्ख्यातौ भ्रमबाधादि ।

एवमर्थसाङ्कर्येऽपि व्यवहारासाङ्कर्यं भूयस्त्वादित्युक्तं 'वैशेष्यात् तु तद्वादः' (ब्र० २. ४. २२) इति च । दोषादृष्टादिहेतुसमवधाने चोपजायमानं शुक्तिभूयस्त्ववैकल्येन रूप्यज्ञानं दोषमूलत्वाद् भ्रम इत्युच्यते । बाधश्चास्य शुक्तिभूयस्त्वसाकल्यग्रहणात् प्रवृत्तिवैफल्यं तत्प्रतिबन्धो वा । ज्ञानं हि स्वतो न बाध्यते स्वरूपसत्त्वात् । एवं विषयतोऽपि तद्विफलप्रवृत्तिहेतुत्वादपि भ्रमत्वप्रसिद्धिः । नेदं रजतमिति च प्रतियोग्यपेक्षया शुक्तिकालम्बनमेव नाधिकविषयम् । तावतैवाभावव्यवहारसिद्धावतिरेके गौरवात् । कथमेवं रजतार्थी शुक्तौ प्रवर्तेत, रजतज्ञानस्य प्रवृत्तिविषयाविषयत्वाद्, ज्ञातविषया च प्रवृत्तिरिति । न । ख्यात्यन्तरहेतुतया परोपेतसाधारणाकारग्रहभेदाग्रहदोषादृष्टैरेव तदुपपत्तेः । अख्यातिमतादत्र मते मन्त्रार्थवादादिप्रामाण्योपगमादौपनिषदं त्रिवृत्करणादिप्रतिनिधिन्यायं भेदाग्रहं चोपजीव्य निर्वाहः, न तु भेदाग्रहमेवेति विशेषः । न चैवं प्रवृत्तित्वावच्छिन्नकार्ये हेतुभेदः, अगृहीतभेदतया गुणप्रधानभावज्ञानस्यैव विशिष्टज्ञानत्वेन भ्रमस्यापि तथाभावाद्, इष्टप्रवृत्तिविषयविशिष्टज्ञानस्यैव प्रवृत्तिमात्रहेतुत्वात् । तदेतदभिसन्धायाह श्रुतप्रकाशिकाकारः—अगृहीतान्तरत्वे सत्यप्रधानतया भातस्यैव विशेषणत्वादिति । लक्ष्मणश्च—देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवतीति । इयत्यैव परेषामिष्टप्रवृत्तिविषयैभेदभ्रमसामग्र्याः प्रवृत्त्युपपत्तौ नाधिकं कल्प्यं गौरवादिति ॥

---

१. 'ति ख्या', २. 'ष', ३. 'भू', ४. 'य' ख. पाठः.

### शुक्तिरूप्यादेः पुरुषमृगवज्जात्यन्तरत्वम्।

नन्वेवमपि विजातीयावयवद्वयसम्पिण्डो न शुक्तिर्न वा रजतं स्यात्। पुरुषमृगवज्जात्यन्तरे च तत्र पुरुषव्यवहार इव शुक्तिव्यवहारो गौणः स्यात्। शुक्तिभूयस्त्वेन मुख्यत्वे रूप्यांशाल्पत्वेनारूप्ये तत्र तद्व्यवहारो न यथार्थः स्यादिति। न। युक्तं पुरुषव्यवहारः सङ्घातभेदरूढः पुरुषमृगे गौण इति, तत्र पुरुषत्वापौष्कल्यात्। अनादिवृत्तशुक्तिव्यवहारः पुनरनन्यविषयतया तत्रैव मुख्यः स्यात्। अगृहीतरजतांशेषु शुक्त्यवयवेषु विरुद्धजात्यसमावेशेन शुक्तित्वपौष्कल्यात्। एतेन दोषबलादगृहीतशुक्त्यंशेषु रजतावयवेषु रजतव्यवहारमुख्यत्वं व्याख्यातम्। तच्च प्रचुरकनकनिगीर्णमिव विजातीयावयवप्राचुर्यादकार्यकरम्। औषधोपसृष्टमिव च पुटपाकापेतोपष्टम्भकशुक्तिमलं न शुद्धं रजतमवशिष्यते भस्मीभावात्। एवं त्रिवृत्करणश्रुतिप्रतिनिधिन्यायसादृश्यदर्शनैरेव मरीचिकोदकभ्रमोऽपि व्याख्यातः॥

---

### स्वप्नादिसत्यत्वम्।

स्वप्नेऽपि[2] प्राणिपुण्यपापानुगुणा दृष्टविसजातीया भागवती सृष्टिः सत्यैव, देशान्तरगत्याद्यनुगुणस्वाप्नदेहान्तरे च शयानदेहाभेदव्यवहारो भेदाग्रहकृतः नान्यथाख्यातिकृतः। एवं तत्र तदेकानुभाव्यत्वतत्कालावसायित्वरूपभेदाग्रहादेव प्रवृत्त्यादिः, न साधारण्यस्थायित्वादिग्रहादिति नान्यथाख्यातिः।

नयनगतपित्तद्रव्यानुलिप्ततया पीतः शङ्ख इति भेदाग्रह एव, सुवर्णालिप्तशङ्खवद् द्रव्यद्वयग्रहणोपपत्तेः। एवं जपाकुसुमप्रभासम्बन्धात् तद्विवेकाग्रह एव रक्तः स्फटिक इति। अलातचक्रज्ञानमपि तस्य शीघ्रभ्रमणेनागृहीतक्रमं विष्वग्देशसंयोगग्रहरूपमन्यचक्रज्ञानमिव यथार्थमेव। सदसदन्तरालाग्रहौ तु विशेषः। एतदेवालातचक्रे द्रव्यान्तरेण सम्बन्धाद् यथार्थाप्रतीतिरिति निर्वाह इत्युच्यते। न तु मरीचावुदकमिव तत्र विपुलवृत्तसन्निवेशमेव द्रव्यान्तरं शक्यमुपगन्तुमिति। एवं दर्पणादिप्रतिहतपरावृत्तनायनरश्मिभिरतिशैघ्र्यादगृहीतावगतदर्पणदेशतदाभिमुख्यतद्वामदक्षिणादिवि-

---

१. 'ति यु', २. 'पि पुं' ख. पाठः.

शेषान्तरालं मुखादिग्रहणमपि नायथार्थम् । तथा दिङ्मोहोऽपि 'पद्भ्यां भूमिर्दिशः श्रोत्रात्' इत्यादिश्रुत्या दिशामनेकत्वे सर्वत्र भावाद् दृष्टादिना दिगन्तरस्यैव ग्रहणोपपत्तेः । सर्वत्र सर्वदिग्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया । तत्र दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानमसावबाचीति यथार्थमेव ।

द्विचन्द्रादिज्ञाने चाङ्गुल्यवष्टम्भतिमिरादृष्टादिना नायनतेजोगतिभेदेन भिन्नायां सामग्र्यामेका परानपेक्षा स्वदेशाविशिष्टं चन्द्रं ग्राहयति, अपरा च किञ्चिद् वक्रगत्या गृहीतचन्द्रसमीपदेशागृहीतभेदं स्वदेशावियुक्तं चन्द्रम्, इत्येवं शैघ्र्यादगृहीतभेदक्रमं चन्द्रज्ञानद्वयमुत्पद्यमानं प्रत्यभिज्ञानवत् प्रागनुभवसंस्कारासाचिव्याच्चन्द्राभेदानवभासीति ग्राह्याकारभूतदेशभेदगतद्वित्वभेदाग्रहाद् द्वौ चन्द्रावित्यवभासयतीति न किञ्चिदयथार्थम् । नेत्रवृत्तिवर्तिद्वित्वभेदाग्रह इत्यन्ये । तथाच संवित्सिद्धौ —

"नेत्रवृत्तिर्द्विधा भूता द्वे तु वृत्ती वितन्वती ।
द्वित्वं चन्द्रं च युगपन्निर्भासयति तत्र न ॥"

इति ॥

---

### सिद्धान्तोट्टङ्कनम् ।

अथवा किमनेनोपपादनप्रकारेण । भगवता सर्वज्ञसत्यसङ्कल्पेनाश्चर्यशक्तिनाखिलं जगत् सृजता चेतनपुण्यपापानुगुणा विचित्राः साधारणा असाधारणाश्च ते तेऽर्थाः सृज्यन्ते । बाध्यबाधकव्यवस्था च तदेकानुभाव्यतया तत्कालावसानेन सर्वानुभाव्यतया कालान्तरानुगमेन चोपपद्यते । न चानेनैवोपाधिना मिथ्यात्वं सत्यत्वं वा, सुखादेरमिथ्यात्वाद्, वियदादेरपि मिथ्यात्वोपगमाच्चेत्यतो नाविद्यानिर्वचनीया शक्यास्थातुं, तदप्रसिद्धेः ॥

---

### अविद्यायां प्रत्यक्षम् ।

अथापि यदि स्यादियं प्रत्यक्षादिसिद्धा, चिदात्माश्रया वस्तुस्वरूपतिरोधानेनान्तरबाह्यविचित्राध्यासोपादानमनिर्वचनीया वस्तुतत्त्वज्ञानबाध्या भावरूपा

अविद्याज्ञानादिशब्दिता कथञ्चिदुपपाद्येत नहि दृष्टेऽनुपपन्नं नामेति, तदविविक्ततया तच्छक्तितया वा ब्रह्मणोऽपि जगत्कारणत्वव्यपदेशोपपत्तेः । तत्र न तावत् प्रत्यक्षमहमज्ञो मामन्यं च न जानामीति, ज्ञानाभावविषयत्वोपपत्तेः ।

नन्वहं सुखीति न दुःखाभावविषयम् । किं कारणम्, अपरोक्षावभासत्वात् । अभावस्य च षष्ठप्रमाणगम्यस्य परोक्षत्वात् तदज्ञानानुभवेऽपि तुल्यम् । अपिच धर्मिप्रतियोगिज्ञानभावे ग्राह्याभावात् तदभावे ग्राहकाभावाद् नायं ज्ञानाभावानुभवः, विरोधात् । धर्मितयात्मनि तज्ज्ञाने वान्यज्ञाने वा प्रतियोगितया सह विषयेण ज्ञायमाने मामन्यद् वा न जानामीत्यात्मानात्मविषयज्ञानाभावानुभव इत्यसम्भवदुक्तिकत्वात् । न च भावरूपाज्ञानवाद एष दोषः, सर्वस्यैव ज्ञाततया[1]ज्ञाततया वा साक्षिभास्यत्वे सति प्रमाणव्यवधाने तस्याज्ञानविरोधः । तदभावे त्वज्ञानस्यैव सिद्धिरिति । तदिदं न्यायोपेतं प्रत्यक्षमज्ञाने मानम् ॥

---

## अविद्यायामनुमानम् ।

अनुमानं च — विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वानिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाश(क)त्वात् । अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशवदिति । अत्र धारावाहिचिदात्मव्यावृत्तये पक्षविशेषणम् । साध्ये चात्मनार्थान्तरवारणाय वस्त्वन्तरेति । चक्षुरादिना तदभावाय स्वदेशगतेति । आश्रयो विषयो वा देशः । सुखादिजनकादृष्टादिना तन्निरासाय स्वनिवर्त्येति । ज्ञानोत्पादकादृष्टस्य स्वनिवर्त्यत्वादाह स्वविषयावरणेति । नास्ति न प्रकाशत इति व्यवहारप्रयोजकेन ज्ञानप्रागभावेन तद्व्युदासाय स्वप्रागभावव्यतिरिक्तेतीति विलोमव्यावृत्तिः । प्रागभावव्यावृत्तये स्वप्रागभावव्यतिरिक्तेति । विषयव्यवच्छेदाय स्वविषयावरणेति । अन्धकारादिनिवृत्तये स्वनिवर्त्येति । विषयगतज्ञातताभावपरिहाराय स्वदेशग-

1. 'या वा' ख. पाठः.

तोति । अथवेदृशं स्वदेशगतवस्त्वन्तरमेवेति स्वरूपोक्तिरित्यनुलोमव्यावृत्तिः । उद्देश्यसिद्ध्यर्थानि च सर्वाणि विशेषणानि । नहि तैर्विना स्वसमानाश्रयविषयज्ञाननिवर्त्यभावरूपाज्ञानसिद्धिरित्याहुः । धारावाहिकद्वितीयादिज्ञाने निरुक्तसाध्यशून्ये अर्थप्रकाशके अव्यभिचारायाप्रकाशितार्थेति । साक्षात् परम्परया वा विषयव्यवहारानुगुण्यापादकत्वं ज्ञानदीपप्रभासाधारणं प्रकाशत्वं संस्कारत्ववद् बाह्याबाह्यसाधारणो जातिभेदो वा अनिर्वचनीयाखण्डधर्मो वा प्रकाशत्वमित्यपि केचित् । एवं चेन्द्रियेष्वव्यभिचाराय भासमानत्वे सतीति विशेषणीयम् । दृष्टान्ते च साधनाद्यवैकल्याय प्रथमोत्पन्नेति । तदुपपादनायान्धकार इति ॥

---

## तमसो भावत्वम् ।

अथ

उत्पत्तिज्ञप्तिहेतूनामनिरूपणतस्तमः ।
आलोकविरहो रूपदर्शनाभाव एव वा ॥

नैवम् ।

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यात् तदेभ्यो भेत्तुमर्हति ॥

तस्य च

पृथिव्यादिपराणुभ्यो भिन्नेनारम्भसम्भवः ।
आलोकासहभूताक्षगम्यत्वमपि दर्शनात् ॥
दीपप्रभादिनिर्वाणे घनक्षोभे यथा तडित् ।
कयाचिदपि सामग्र्या झटित्युत्पद्यते तमः ॥
अथवाकाशकार्यं तद् रूपं पञ्चीकृतेर्भुवः ।
स्पर्शो वा तेजसः कार्येऽनुद्भवान्नोपलभ्यते ॥
इत्येवमूचिरे केचित् सिद्धान्तं तु प्रचक्ष्महे ।
अविद्याकार्यमेतद् या शक्तासम्भाव्यसम्भवे ॥
निमीलितदृशो रूपदर्शनाभाव एव नः ।
तमोबुद्धिपदं किन्तु नीलमाभ्यन्तरं तमः ॥

रूपप्रतीतिवेलायामपि नीलं तमः स्फुरत् ।
न रूपदर्शनाभावमभ्रान्तो वक्तुमर्हति ॥
तमः ससर्ज भगवानासीत् तम इति श्रुतिः ।
ब्रुवाणा सृष्टिसंहारौ तमसो भावतां जगौ ॥

यथा चाहुः—

"तमो नाम द्रव्यं बहुलविरलं मेचकरुचि
प्रतीमः केनापि क्वचिदपि न बाधश्च ददृशे ।
अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते
निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात् ॥"

इति । तस्मादविकलो दृष्टान्त इति ॥

---

**अज्ञाने श्रुतिः ।**

आगमोऽप्यज्ञाने मानम् । 'नीहारेण प्रावृता जल्प्या च' । नितरां ह्रियते स्ववशीक्रियते असत्समं क्रियते वस्तुस्वरूपमनेनेति योगेन वा हिमवत् प्रकाशवृत्तिपरिपन्थित्वगुणेन वा नीहार इत्यज्ञानमुच्यते । तेन प्रावरणं विकल्पविक्षेपं चोक्त्वा 'असुतृप उक्थशासश्चरन्ती'ति तन्निमित्तसंसारोपवर्णनात् । 'अनृतेन हि प्रत्यूढाः' अनृतमज्ञानं सत्यविपरीतत्वात्, लब्धालाभहेतुत्वोक्तेश्च, लब्धललाटिकाद्यलाभस्य लोके मोहमूलत्वदर्शनात् । अज्ञानेनावृतं ज्ञानमित्यादि ॥

---

**अज्ञाने अर्थापत्तिः ।**

श्रुतार्थापत्तिरपि 'तत्त्वमसि', 'ब्रह्म वेद ब्रह्मैव भवती'[1]त्याद्युपदेशा भेदादेरविद्यामात्रतामन्तरेण न पर्यवस्यन्तीति ।

दृष्टार्थापत्तिरपि । मिथ्यार्थावभासो हि कादाचित्को मिथ्यैवोपादानं कल्पयति । उपादानोपादेयतुल्यस्वभावत्वदर्शनात् । नह्यागम इव कल्पनादि

---

१. 'तीत्युप' ण. पाठः.

न निदर्शनमवेक्षेत, येन विलक्षणमप्युपादानमवकल्पेत । तच्चानादि कल्प्यते मा भूदनवस्थेति । यत् तदनादि मिथ्या मिथ्यार्थोपादानमज्ञानमिति मानसिद्धत्वादभावव्यावृत्तमनिर्वचनीयमनाद्यज्ञानमात्माश्रयविषयमुपेयते ॥

---

## अज्ञानस्य ज्ञानाभावरूपत्वनिरासेन भावरूपत्वकथनम् ।

ननु अहमज्ञो न जानामीत्यहङ्काराश्रयमुपेयमानमज्ञानं ज्ञानाभाव एवेति साम्प्रतम् । ज्ञानसामान्याभावानुभवायोगात् । परस्य सविषयत्वमिव च विरोधिज्ञानगतमहमाश्रयत्वमवभासते । अथवाहङ्कारस्याज्ञानानुगतात्माधिष्ठानतयाहमज्ञ इत्यवभासः, यथा लौहित्यानुगतस्फटिकाधिष्ठानतया मुखस्य लोहितं मुखमित्यवभासः । यद्यप्यज्ञानस्वरूपावभासोऽपि विभ्रम एव, तथापि न तस्य तत्सिद्धौ सामर्थ्यं हीयते । अज्ञानस्य तदेकप्रत्ययत्वात् । न चानहमालम्बमज्ञानं तदुपरमे सुप्तौ न भासते । तदहमाश्रयतावभासे अज्ञानस्य स्वरूपावभासे वा विभ्रमत्वे समानेऽपि व्यवहारविषये कश्चिदेव भ्रमो नान्य इति व्यवतिष्ठत इति न किञ्चिद् बाधकमिति ।

अत्राभिधीयते — अज्ञानविरोधित्वे प्रमाणज्ञानत्वमतन्त्रम् । किन्तु वस्तुस्वरूपावभास एव । स च स्वतः परतो वेति न कश्चिद् विशेष इत्यशिषाम । तत्रैवमज्ञानाश्रयविषयभावेनात्मावभासे विरोधादज्ञानं न निरूप्येत । तदनवभासे च नतराम् । मामन्यद् वा न जानामीति साश्रयविषयस्यैवाज्ञानस्य निरूप्यत्वात् । प्रमाणेन विशदावभासोऽज्ञानविरोधी, न त्वज्ञानावच्छेदकतया । अविशदावभास इति चेत् तर्हि स्वातन्त्र्येण विषयादिविशदावभासो ज्ञानाभावविरोधी, नाभावनिरूपकतया अविशदावभास इति तुल्यम् । एतदुक्तं भवति — अज्ञानानुभवदशायां तन्निवर्तकाभिमतप्रमाणज्ञानाभावस्त्वयापि तावदुपगन्तव्यः । अन्यथा तदनुभवविरोधात् । ततश्च लाघवात् तमेवाहमज्ञो मामन्यं च न जानामीत्यालम्बताम् । अनुभूयमानाभावप्रतियोगिज्ञानस्यात्मन्यप्याश्रयविषयतया प्रतीतरूपातिरिक्तशास्त्रीयरूपविशदावभासस्येदानीमवि-

---

१. 'ध्यात्वोपा', २. 'म्बज्ञा', ३. 'न नि' ख. पाठः.

द्यमानत्वेनाविरोधात् । प्रतियोगिभूतज्ञाने च स्मृत्यारूढे तदवच्छेदकतया विषयस्याविशदावभासत्वात् । अथ कथमसन्ननुभूतः प्रतियोगिभूतज्ञानविशेष इदानीं स्मर्येत, यतस्तदभावोऽनुभूयेत ।

यत्तु—प्रतियोगिविशेषज्ञानमतन्त्रं, प्रतियोग्यंशे अभावज्ञानसमानप्रकारकप्रतियोगिज्ञानादेवोद्देश्यविशेषाभावसिद्ध्युपपत्तेः । घटो ध्वस्त इत्यादिदर्शनात्, पाशबद्धादेरुच्छ्वासादिचेष्टासद्भावेऽपि निश्चेष्टोऽहमित्यादिप्रत्ययाच्चेति । तन्न । एवं सति सामान्यविशेषाभावभेदासिद्धिप्रसङ्गात् । नीलघटसत्त्वज्ञानेऽपि घटो नास्तीति पीतघटाभावप्रत्ययापत्तेश्च । किञ्च घटसत्त्वज्ञान एव घटो नास्तीति विशेषाभावः प्रतीयेत । यदि च प्रतियोग्यंशे अभावज्ञानसमानप्रकारकप्रतियोगिसत्त्वज्ञानमभावज्ञानविरोधि, तर्हि धर्म्यादिज्ञानमपि तथैव ज्ञायत इति ज्ञानाभावज्ञानानुपपत्तिः । घटो ध्वस्त इत्यादिव्यवहारोऽपि लक्षणया विशेषालम्बनः । ज्ञानं तु विशेषविषयमेव । अत एव घटो भविष्यतीति चाभूतसत्त्वावच्छिन्नो विशेष एव कालान्तरसम्बन्धी गम्यते । न तु विशेषाभावः प्रतियोगिसामान्यालम्बनज्ञानविषयः उक्तदोषादिति चेत् ॥

---

**भावरूपाज्ञानाक्षेपः ।**

उच्यते — आत्माज्ञानविशेषस्तावत् तद्विधायकागमादेव सिध्यति । घटादिसाक्षात्कारोऽपि परवचनाद् मेरुं धर्मं वा साक्षात्कुर्वन्ति देवा योगिनो वेत्युपदेशात् तत्साक्षात्कारानुभवोऽप्युपपद्यते । यदि वा न तत्साक्षात्कारः प्रागनुभूतः, तथापि साक्षात्कारो मेर्वादिश्चेत्युभयमसंसृष्टं कथञ्चिदनुभूतमिति तत्संसर्गनिषेध उपपद्यते मेरुं धर्मं वा न जानामीति । अन्यथा प्रागदृष्टचत्वरगजस्य चत्वरे गजो नास्तीति व्यवहारानुपपत्तेः ।

अत एव प्रमाणज्ञानानामभावप्रतियोगित्वादभावग्राहकमेव तदा नास्तीति निरस्तम् । तत्तद्विषये सामान्यतो ज्ञाते विशेषज्ञानाभावस्य सन्दिग्धे निर्णयाभावस्य परोक्षावगतेऽपरोक्षाभावस्य चोक्तविधयानुभवोपपत्तेः ।

अपिच त्वयापीयमेव प्रक्रियाश्रयणीया । अज्ञानमिति ह्रस्व इत्यादिवन्नाखण्डार्थं, न जानामीत्यादिशब्दानुभवतुल्यविषयत्वात् । 'अज्ञानमिति

जडात्मिकाविद्याशक्तिर्ज्ञानपर्युदासेनोच्यते' इति हि टीकाकृतः । तदिदं भावस्वभावमपि ज्ञानप्रतियोगित्वेन भासमानमवभासेत न जानामीति, न स्वरूपेण । मायामोहादिशब्दस्यापि ज्ञानप्रतियोगिवृत्त्याज्ञानपर्यायत्वेन व्युत्पत्त्यपेक्षया तद्रूपैकप्रत्यायकत्वात् । तत्र न ज्ञानमात्रविरोधित्वेनाज्ञानसिद्धिः, अज्ञानतदाश्रयविषयावभासविरोधात् । नन्वब्राह्मणादिवत् तदन्यतया तत्सिद्धिः, नत्वप्रकाशादिवत् तद्विरोधितया । स्वरूपज्ञानं च नाज्ञानानुभवविरोधीति[२] चेद्, न । मामन्यं च न जानामीति साश्रयविषयज्ञानविशेषप्रतियोगित्वेनैव तदनुभवात्[३] । न च साश्रयविषयमज्ञानमेव भासते न ज्ञानमिति वाच्यम् । विशेषहेत्वभावात् । तद् यदि ज्ञानविशेषविरोधित्वेन तदन्यत्वेन तदभावत्वेन वा अज्ञाने निरूपणीये तत्प्रतियोगितया चावश्यप्रत्येये तद्विषयापरोक्षप्रमाणज्ञानादाववच्छेदकतया घटादिरात्मा वा भासेत । तद्विरोधान्नाज्ञानमनुभूयेत ।

अपिच सविषयमज्ञानमनुभूयत इति तव सम्प्रतिपन्नम् । सविषयत्वं च तस्य विषयावारकत्वमेव, अन्यानिरूपणात् । तच्च न स्वरूपप्रकाशनिरोधित्वं, तवाज्ञानाद्यसिद्धिप्रसङ्गात् । किन्तु तद्विषयप्रमाणज्ञानप्रतिबन्धकत्वमिति तद्रूपज्ञेयाज्ञानावच्छेदकतया सविषयप्रमाणज्ञानप्रतीत्यवश्यम्भावादुक्तदोषः । अविद्यमानप्रमाणज्ञानावच्छेदकतया विषयस्याविशदावभासत्वादविरोधे चाज्ञानमुभयसम्मतविशेषज्ञानाभावविषयमस्तु, कृतं भावरूपाज्ञानान्तरकल्पनागौरवेण ।

अपिच ज्ञानाभावप्रतीतिरवश्याभ्युपगन्तव्या । नहि प्रमाणज्ञानाभावो भवता नेष्यते, तत्प्रतीतिर्वा । सदातनत्वे तस्याज्ञानानुभवविरोधात् । सुखादौ तव शुक्तिरूप्यादौ चोत्पत्त्यैव प्रकाशाव्यभिचारितया प्रातीतिकतया च भावरूपाज्ञानानङ्गीकारेण भावि सुखं न जानामि इयन्तं कालमिदं रूप्यं नावेदिषमिति ज्ञानाभावानुभवावश्यम्भावाच्च । अन्यथा मम तज्ज्ञानं नास्तीति लौकिकज्ञानाभावविवक्षायोगाच्च । अत्र यद्यपि तन्त्रिणोऽपि भावान्तरमभाव इत्युपयतो ज्ञानाभाव इत्यपि भावरूपाज्ञानमेवापद्यते, तथापि तस्य स्वप्रकाशज्ञानसङ्कोचावस्थाभेदो विषयविकासावस्थान्तरापेक्षया अभाव इति अज्ञानमित्युच्यते । सिद्धान्ते तु स्वप्रकाशज्ञानातिरिक्तस्वभावमावरणात्मकमिति

---

१. 'न ज्ञानासि', २. 'तीतित्वे', ३. 'त् । सा' ख. पाठः.

विशेषः । तत् त्वप्रामाणिकं कल्प्यम् । क्लृप्तस्तु ज्ञानाभावः । तत्रापि सङ्कोचावस्थाया बुद्धेरवस्थान्तरापेक्षया अभावत्वोपगमात् । आत्मधर्मभूतज्ञानसङ्कोचविकासावस्थाभेदश्च प्रामाणिकः । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' ।

"अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते"
"तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता"
"सर्वभूतेषु भूपाल! तारतम्येन वर्तते ।
अप्राणिमत्सु स्वल्पा सा ह्यतिशक्त्या पतत्रिषु ॥"

इत्यारभ्य

"हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः"

इत्यादौ ज्ञाननित्यत्वतत्सङ्कोचाद्यधिगमात्, तद्विपर्यं चाहमज्ञ इति युक्तम् । अवस्थाभेदानन्त्येऽपि प्रमाणप्रतिपन्नतया लाघवन्यायानवतारात् ।

अपिच न ज्ञानविरोधितयाज्ञानमनुभावितुं शक्यम्, असमानाश्रयत्वे विरोधायोगात्[1] ।

"यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः"

इति ह्याहुः । न चे ज्ञानमात्रनिवर्त्यतया, तदज्ञानज्ञानविरोधात् । तत्प्रमाणज्ञानस्य तत्प्रमाणसाक्षात्कारस्य वा तन्निवर्तकस्याभावदशायामज्ञाने तन्निवर्त्यत्वस्याभावेनायोग्यतया चाध्यक्षयितुमशक्यत्वात् ।

अपिच न प्रमाणज्ञानं तन्निवर्तकं, शास्त्राद् ब्रह्मज्ञानेऽपि तदनिवृत्तेः । नापि प्रमाणसाक्षात्कारः, श्रवणादिना ब्रह्मणो धर्मादेर्वा निश्चये न जानामीत्यापत्तेः । अथ तन्निश्चयेन तदज्ञानस्यानुभवप्रतिबन्ध एव, न तन्निवृत्तिः । अन्यथा उपदिष्टेऽनुमिते वा स्वर्गादौ रसालरसादौ चापरोक्षवदभिव्यक्ते जिज्ञासासंशयाद्ययोगात् । अनुपाधिकसंशयादेरन्वयव्यतिरेकाभ्यां विषयावारकाज्ञानहेतुकत्वस्य क्लृप्तत्वात् । धर्मादौ जिज्ञासाद्यभावश्च । ज्ञानान्तरायोग्यतानिश्चयात्, ज्ञेयरूपान्तराभावनिश्चयाच्च, परोक्षाज्ञाननिवृत्तौ मानाभावाच्च । नहि विषयप्राकट्यमध्यक्षवदस्ति, असंशयादिं चाज्ञाननिवृत्तिमन्तरैव

1. 'रोधित्वाद्यो' ख. पाठः.

निरवाक्ष्म । जानामीति व्यवहारः प्रवृत्तिर्वा ज्ञानमात्रापेक्षो नाज्ञाननिवृत्तिमाक्षिपति, भ्रान्तरजतादावपि तदुभयदृष्टेः । तत्र चाप्रसिद्धेरज्ञानस्यानिवृत्तेरिति चेद् , न । तव केवलसाक्षिरूपस्यानादेरज्ञानानुभवस्य प्रतिबन्धासम्भवाद् , धर्मादिज्ञाने तदज्ञाननिवृत्त्यनुभवस्य विना बाधकमभ्रान्तत्वाच्च । अपरोक्षे चाभिव्यक्तेर्योग्यस्य सतो विषयस्य प्रमातृसंविदभेदाधीनत्वाङ्गीकाराद् , रसालरसादौ च जिज्ञासादेरज्ञातरूपभेदविषयत्वाद्, ज्ञातरूपे संशयाद्यभावाच्च । अत एवैते धवखदिरपलाशा इत्यौपदेशिकापरोक्षज्ञाने सत्यपि धवोऽयं खदिरो वायं खदिरोऽसौ वेति प्रतीतरूपातिरिक्तविषय एव जिज्ञासासंशयो वा न प्रतीतविषय इत्यतो न ज्ञानविरोधित्वेन भावरूपाज्ञानमनुभूयेत । न च ज्ञानाभावाज्ञानानुभवानुपपत्तिरित्युक्तम् । न च ज्ञानाभावत्वेन तदेवाज्ञानमनुभूयते अक्लृप्तत्वात् । तस्माद् ,

अविशदनिर्भाताश्रयविषयावच्छिन्नमज्ञानम् ।
अनुभूयमानमुचितं ज्ञानाभाव इति लाघवादेष्टुम् ॥

अपिच मुक्तिदशानिर्विशेषस्वप्रकाशानुभवमात्रस्वभावस्य नाज्ञानानुभवः सम्भवति स्वानुभवैकस्वरूपस्यापि । तिरोधानात् तत्सम्भव इति चेत् , तिरोधानं हि स्वरूपाप्रकाशो, न स्वतः । स्वानुभवस्वरूपत्वादेव । अज्ञानादिति चेत्, तर्हि प्रकाशधर्मत्वानुपगमात् तन्मात्रस्वरूपप्रकाशत्वे सति तिरोधानविरोधादात्मस्वरूपनाश एव तिरोधानमापद्येत ।

अपिच न सत्तया प्रातीतिकमज्ञानमात्मप्रकाशं[२] तिरस्कुर्यात् । सत्तया तिरस्कारकस्य काचादिवदयाथार्थ्यं हि न स्यात् । न चातिरस्कृते तस्मिन्नज्ञानं शक्यं प्रत्येतुम् । स्वानुभवैकतानस्य स्वभावत एव परागर्थानुभवासम्भवात् । तथा च स्वरूपानुभवे तिरस्कृते अज्ञानानुभवः, अनुभूयमानेन चाज्ञानेन तत्तिरस्कार इति प्राप्तमन्योन्याश्रयणम् । अथापि स्यादनुभूतमेव तत् तिरस्कुर्यादिति, तर्हि स्वरूपावरणमन्तरेण स्वभावादेव ब्रह्माज्ञानमिवापरमार्थमन्यमपि परागर्थमनुभवत्विति तिरोधानकल्पनानर्थिका, अज्ञानकल्पना च ।

अपिच अज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेन निर्मोक्षः स्यात्, स्वभावस्यानपायात् । स्वभावादेव ब्रह्मणो मिथ्याज्ञानानुभवस्वरूपस्य बाधकज्ञानबा-

---

१. 'स्य', २. 'शा' ख. पाठः.

ध्यता च स्याद्, मिथ्यारजतानुभववत् । अन्यप्रयुक्तत्वे च यद्यन्यद्-ज्ञानान्तरम्, अनवस्था । अथ तदेवाज्ञानं, ब्रह्मस्वरूपातिरस्कारतदनुभवयो-रुक्तो दोषः ।

अपिच, अविद्यातिरोहितं ब्रह्म यदि न किञ्चिदपि प्रकाशेत, प्रकाशमात्रं न प्रकाशत इति तुच्छतापत्तिः । आन्ध्यं च जगतः । अथ किञ्चित् प्रकाशेत । न । निरंशे निर्विशेषे प्रकाशमात्रे युगपत् तिरस्क्रियमाणप्रकाशमानाकारद्वयासम्भवात् । अथ तदेवाविद्यावृतमविशदमवभासत इति चेत्, सांशे सविशेषे प्रकाशविषये च सकलावभासो विशदावभासो विकलावभासश्चाविशदावभास इति सम्भवति । नहि प्रतिपन्नरूपावभास एवाविशदः । न व अप्रतिपन्नरूपावभासः, अभावादेव । विषये तु समुदितरूपे कथञ्चित् प्रतीयमाने कतिपयांशाकारानवभास एवावैशद्यमित्यनंशेऽविशेषे प्रकाशमात्रे ब्रह्मणि प्रकाशमाने तदसम्भव इति ।

अपिच विद्यया अविद्याधीनावैशद्यानिवृत्तावनिर्मोक्षः । तन्निवृत्तौ च यद् विशदप्रकाशस्वरूपं तदविद्यादशायामस्ति चेदविद्यावैशद्यं तन्निवृत्तिर्वा न स्याद्, विशदस्वरूपस्याविद्याविरोधित्वात् । न चेत् तद्रूपस्य मुक्तस्वरूपस्यानित्यत्वप्रसङ्गः । भावकार्यस्यानित्यत्वनियमात् । तस्मादध्यक्षमन्यथासिद्धमपि तर्कपराहतं न भावरूपमज्ञानमुपपादयितुं क्षमम् ॥

---

**अज्ञानानुमानदूषणम् ।**

नाप्यनुमानम् । अप्रकाशितार्थप्रकाशकत्वं ह्यस्यामज्ञानानुमितावपीति तत्राज्ञानान्तरसिद्धौ तदावृतत्वेन स्वाज्ञानमात्मना नानुभूयेत । अतश्चापरमार्थस्याप्रतीयमानस्याकार्यकरत्वेन कल्पनानर्थक्यम् । सत्तया कार्यकरत्वे च काचादिवत् सत्यस्य ज्ञाननिवर्त्यत्वं न स्यात् । तदसिद्धौ च तत्रैव बाधः । अपक्षत्वे वा हेतोरनैकान्त्यमिति । ननु नाज्ञानानुमितिरप्रकाशितार्थप्रकाशिका, साक्षिसंविदिताज्ञानविषयत्वात् । न च सिद्धसाधनम्, अभावविवेकफलत्वादिति चेत् । न । अनुमानप्रामाण्याज्ञानभावत्वतत्साक्षिगम्यत्वानामन्योन्यापेक्षसिद्धिकतया चक्रकापत्तेः । यावद्धि नाज्ञानस्य साक्षिगम्यत्वसिद्धिः न तावदनुमानप्रा-

माण्यं, तदनुमितावेवानैकान्त्यात् । यावच्च नानुमानप्रामाण्यं, न तावद-ज्ञानभावत्वसिद्धिः । यावच्च न तत्सिद्धिः, न तावद् ज्ञातुरध्यस्तत्वा-सिद्धावज्ञानस्य तद्धर्मभूतज्ञानोत्तीर्णसाक्षिगम्यत्वसिद्धिरिति । अथ यद्यतो-ऽनुमानादज्ञानानुमितिर्निष्पन्ना, किमनैकान्त्येन । अथ न का(प्य)नैकान्त्य-मिति एतावदिह विवक्षितम् । नानेन सम्यग्ज्ञानमुत्पत्तुमर्हति । तत्रैवानैका-न्त्यापत्त्या दुष्टहेतोरसम्यग्ज्ञानजनकत्वात् । नाप्यसम्यग्ज्ञानं, तत्रानैकान्त्या-भावेन सद्धेतोरतज्जननार्हत्वादित्युभयथापि विरोधान्न साध्यसिद्धिरिति । अपि-च किमप्रकाशितार्थप्रकाशकत्वम् । न तावदज्ञानावरणविरोधित्वम् । साध्यसम-त्वात् । दृष्टान्तेऽभावाच्च । नापि तमोविरोधित्वम् । तिमिराज्ञानसाधारणतम-स्त्वानिरूपणात् । अत एव नावरणमात्रविरोधित्वम् । ज्ञानस्यैव नास्ति न प्रकाशत इति व्यवहारविरोधित्वात् । ज्ञानद्वारास्ति प्रकाशत इति व्यवहार-प्रयोजकत्वं चेन्द्रियादेरपि । भासमानत्वविशेषणेऽपि शब्दलिङ्गादावनैका-(न्त्य)म् । न च ज्ञानालोकसाधारणो जातिभेदः प्रकाशकत्वमनिर्वाच्याखण्ड-धर्मो वा परसम्प्रतिपन्नः । न चान्यतरासिद्धो हेतुर्नामेति ।

साध्ये च व्यर्थं विशेषणम् । हेताविव व्याप्तिग्रहणानुपयोगित्वात् । स्वविषयावरणस्वनिवर्त्यवस्तुपूर्वकमित्येवापेक्षितसिद्धेश्च । तावतैवाभावात्मादि-व्यावृत्तेरिति ।

अपिच यद्यज्ञानं नाम किमपि स्याद्, न ज्ञानमात्रब्रह्माश्रयं तदाव-रणं वा स्यात् । शुक्तिकाद्यज्ञानं हि ज्ञात्राश्रयं दृष्टं ज्ञेयावरणं च । यदि च ज्ञेयानावरणं तत् स्याद् ज्ञाननिवर्त्यं न स्यात् । ज्ञेयावरणं हि शुक्तिकाद्यज्ञानं ज्ञाननिवर्त्यं दृष्टम् । तथा यदि ब्रह्माज्ञानस्याश्रयो विषयो वा स्याद् ज्ञानि-वर्त्याज्ञानं वा, न ज्ञानमात्रं स्यात् । ज्ञातृ च ज्ञेयं च स्याद् जीवशुक्तिका-दिवत् ।

तथा विमतं प्रमाणज्ञानं न स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकं, प्रमाण-ज्ञानत्वात् । त्वदभिमताज्ञानानुमित्यादिवद्, धारावाह्युत्तरज्ञानादिवच्च । ज्ञानं च न वस्तुविनाशकं, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् । यदवस्तुनो विनाशकं तच्छक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तं यथेश्वरादिज्ञानं मुद्गरा-दिवेति सत्प्रतिपक्षः । स्वसाध्यसिद्धिविरोध्युपस्थितिसमर्थसमबलोपस्थितप्राति-

रुद्धकार्यकत्वं हि सत्प्रतिपक्षत्वम् । अन्यथा इदमभिधेयं मेयत्वादित्यादावभिधेयत्वमेतन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वादित्यादिरज्ञातविशेषादनुमितिप्रतिबन्धो न स्यात् ।

अपिच यदि भावरूपमज्ञानं स्याद् , न ज्ञानमात्रनिवर्त्यं स्याद् घटादिवत् । न चेष्टविपत्तिफणिविभ्रमादिजनितदुःखभयादिर्भावोऽपि तन्मङ्गलमालादिज्ञाननिवर्त्य इति व्यभिचारः । तस्य क्षणिकत्वेन स्वयमपवर्गाद् , विषादकम्पादिफलापवर्गित्वाद् वा । क्षणिकं च दुःखभयादि । स्वोत्पत्तिहेतुसमवधानसमयमात्रोपलम्भनियतत्वाज्ज्ञानज्वालादिवत् । न खल्वक्षणिका घटादयो दण्डाद्यभावेऽपि नोपलभ्यन्ते । चिरोपलम्भश्च तस्य स्वहेत्वनुवृत्तौ क्रियाया इव वेगानुवृत्तौ सन्तन्यमानत्वात् । अन्यथानुक्षणसन्तायमानस्वहेतुजनितानेकदुःखभयादिसमुदायो घटादिसमुदाय इव युगपदनुभूयेत । भ्रान्तिश्च क्षणिकतया स्वयमेव निवर्तते । तत्सन्ततिनिवृत्तिश्च तद्धेतुदोषनिवृत्त्यैव । विषयतत्त्वज्ञानं तु तद्व्यवहारहेतुरेव केवलम् । वस्तुतस्तु दुःखभयादयोऽपि ज्ञानविशेषा एवेति क्षणिकतया स्वयमेव नश्यन्ति । स्वहेत्वनुवृत्तौ सन्तायन्ते । तदुच्छेदे चोदितस्य स्वतो विनाशादन्यस्यानुदयाच्च सन्तत्युच्छेद इति न कश्चिदपि भावो ज्ञाननिवर्त्य इति । तदेवम्

अनैकान्त्यादसिद्धेश्च प्रतिपक्षपराहतेः ।
न भावरूपमज्ञानमनुमानेन सिध्यति ॥

---

**भावरूपाज्ञानस्यागमानवगतत्वम् ।**

**नाप्यागमेन** । 'अनृतेन हि प्रत्यूढाः' इत्यत्र ऋतादितरदनृतमुच्यते । तत्रापि तदभावविरोधिनो ऋतभूतब्रह्माश्रयत्वतदनुभाव्यत्वानुपपत्तेः । ऋतशब्दं च कर्म । 'ऋतं पिबन्तौ सुकृतस्य लोके' इति समभिव्याहारात् । 'पुण्यस्य कर्मणो दूराद् गन्धो वाती'त्युक्त्वा तत्प्रतियोगिनि 'अनृतादात्मानं जुगुप्सेदि'ति प्रयोगाच्च । तेन अनृतेन प्रत्यूढा इति पापेन प्रतिबन्ध उच्यते । पापं च मोक्षप्रकरणे सासङ्गं पुण्यमपि, अलौकिकत्वे सति संसारानिष्टफलत्वाविशेषात् । 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते', 'क्षीयन्ते चास्य कर्माणी'ति कर्ममात्रस्य मोक्षविरोधित्वश्रवणात् ।

"तस्यान्तरायो मैत्रेय! देवेन्द्रत्वादिकं फलम्"

इति स्मृतेश्च । अनासङ्गं तु पुण्यं कर्मेश्वराराधनरूपमृतशब्दितं यज्ञादिश्रुत्या समुच्चीयते

"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः"
"तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर"
"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः"

इत्यादिस्मृत्या च । यद्यपि 'ऋतं पिबन्तावि'त्यत्र ऋतशब्दः सासङ्गे प्रयुज्यते, तथापि समभिव्याहारादिना पुण्यमृतमनृतं पापमित्यवगम्यते । न त्वज्ञानमिति, तत्र तदप्रसिद्धेः । नापि किञ्चिदनिर्वचनीयमिति, येन तदेव सौषुप्तब्रह्मलाभप्रत्यूहभूतमज्ञानमवसीयेत । नह्यनृतमित्यनिर्वचनीये व्युदपादि, तदप्रसिद्धेः । ख्यातियाथात्म्यं हि समार्तथपाम ।

एतेन नीहारशब्दं कर्मेति व्याख्यातम् । तस्यैव ज्ञानाद्यावरणेन संसारहेतुत्वात् ।

'नासदासीन्नो सदासीत् तदानीं तम आसीदि'त्यपि परत्रोत्पत्तौ सत्त्यच्छब्दितचिदचिद्व्यष्ट्योरप्ययकाले अचित्समष्टिमये तमसि प्रलय एव प्रतिपाद्यते । न तु कस्यापि सदसदनिर्वचनीयता ।

"अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते"

इति विशुद्धे ब्रह्मण्यपि दर्शनात्, कालभेदेन सदसद्भावमात्रवचनाच्च । नहि कालभेदे(न) भवतानिर्वचनीयतोपेयते ।

अथापि स्याद् अचित्समष्टिमयी तमश्शब्दा प्रकृतिरेव । 'मायां तु प्रकृतिं विद्यादि'ति मायासंशब्दनादनिर्वाच्या विद्येति । न स्यात् । अनिर्वचनीय(त्व)निरासेन मायाशब्दस्यातादर्थ्यात् । 'तेन मायासहस्रं तदि'त्यादौ सत्येऽपि प्रयोगादिन्द्रजालादावन्यत्र चानुगतमाश्चर्यत्वमेव[2] मायाशब्दवृत्तिनिमित्तम् । प्रकृतावपि विचित्रानन्तसर्गकरत्वादित्यतः सा मायोच्यते । तच्च दर्शयति 'अस्मान्मायी सृजते विश्वमेतत्' 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादि । सैवैषोच्यते ।

---

१. 'हा', २. 'र्यमे' ख. पाठः.

"दैवी ह्येषा गुणमयी मम माया दुरत्यया"

इति, 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यादावपि कर्मरूपपरिणता प्रकृतिरेव वा कर्मैव वा निरुक्तनिमित्तेन मायेत्यनवद्यम् ।

"तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते"

इत्यादावपि कर्मैव । 'अविद्याकर्मसंज्ञान्ये'ति स्मरणात्, 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्ट' इति श्रुत्यैकार्थ्योपपत्तेश्च । तस्माद्

अनृतश्रुतेश्च सदसत्प्रतिषेधश्रुतेश्च न ।
मिथ्याज्ञानमनिर्वाच्यं मेयमन्यपरत्वतः ॥

---

अज्ञानार्थापत्तिनिरासः ।

नाप्यर्थापत्तेः, मिथ्याकार्यस्यापि विना मिथ्योपादानमनुपपत्त्यभावात् । *न विलक्षणत्वन्यायेन हेतुकार्यसालक्षण्यस्यानपेक्ष्यत्वात् । व्यावहारिकजगतोऽपि तव प्रातिभासिकाज्ञानोपादेयत्वोपगमाद्, व्यावहारिकत्वे वाज्ञानस्य प्रातिभासिकस्वप्नाद्युपादानत्वोपगमाच्च । न च गाढं सुप्तो न किञ्चिदवेदिषमिति प्रतिबुद्धपरामर्शानुपपत्तिः, ज्ञानाभावानुमानादुपपत्तेः । नापि 'तत् त्वमसी'त्याद्यभेदोपदेशानुपपत्तिः, त्वंशब्दस्यापि जीवशरीरकब्रह्मपर्यन्ततया विशिष्टाभेदेनोपपत्तेः । श्रुतार्थानुपपत्त्या हि कल्प्यमानं तदुपपादकं कल्प्येत, न तदपवादकम् । एवञ्च यद्यज्ञाननिबन्धनो भेदः स्यात्, सर्वज्ञसर्वशक्तेरीश्वरस्याज्ञानसंसारादि कल्प्येत, सार्वज्ञ्यादिकं वा आज्ञानिकम् । न च सर्वानुगमावैमत्यवृत्तिविषयं तन्मृषेति वदन् वेदवादी नाम ।

नापि मोक्षोपदेशानुपपत्तिः, दर्शनरू(पा ? पता)पत्त्यवधिकोपासनया कर्मक्षये बन्धनिवृत्त्याद्युपपत्तेः । 'भिद्यते हृदयग्रन्थिरि'त्यादिशास्त्रात् ॥

---

* 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' (ब्र० २. १. ४)

**इतिहासपुराणयोर्ब्रह्माज्ञानवादाभावः ।**

इतिहासपुराणयोरपि न क्वचिद् ब्रह्माज्ञानवादो दृश्यते ।

तस्मादनस्तिकमशेषविशेषहीने
वस्तुन्यवस्तुमयविभ्रमजालमूलम् ।
मानान्तराणि वितथानि करोत्यविद्या
या सा हि मानपदवीषु दवीयसी ते ॥

एवं सति निर्विशेषस्वरूपविज्ञानादेवात्मनोऽविद्याद्यनर्थबाधेन स्वरूप-प्रतिष्ठा कैवल्यमिति महतां मतिवैकल्यमेवेति ॥

---

**सिद्धान्तः — अविद्याश्रयः ।**

अत्राभिधीयते — यत् तावज्जीवो ब्रह्म वा नाविद्यादोषाश्रय इत्यादि । तन्न । तथाहि —

यस्यैते विभ्रमास्तस्य दोषोऽविद्यादिलक्षणः ।
यस्य वा सोऽपरोक्षः स्यात् तस्यानाश्रयता कथम् ॥

भास्यभासकसम्बन्धो भास्यभानप्रयोजकः ।
संयोगादेरयोगेन तादात्म्यमवशिष्यते ॥

स्वरूपकार्यभिन्नस्य तादात्म्यं यस्य येन च ।
आश्रयाश्रयिभावः स्याद् गुणगुण्यादिवत् तयोः ॥

न प्रमातुरसौ धर्मः सुषुप्तावपि दर्शनात् ।
न निर्विशेषचिद्रूपब्रह्मणोऽपि कथञ्चन ॥

किन्त्वविद्याविवेकेन सविकल्पावभासनम् ।
सर्वसंसारसम्भारभाजनं तदुपाश्रयः ॥

तदेव बुद्ध्युपाधीद्धः प्रमातेति निगद्यते ।
तेनाविद्या तदाश्लिष्टा न जानामीति भासते ॥

---

१. 'ति । त' ख. पाठः.

स्वरूपं लभमानैव लभते साश्रयैव सा।
इति द्वयोरनादित्वे दोषो नान्योन्यसंश्रयः ॥

ब्रह्मैव तदधिष्ठानं तस्य बाधावधित्वतः ।
यथाखण्डात्मकं कालमवच्छिन्दत् क्रियादिकम् ॥

तदेतत्कालवर्तीति तस्मिन्नेव विकल्प्यते ।
तथाविद्या चिदात्मानं निर्भिन्दाना निसर्गतः ॥

जीवाश्रया विकल्प्येत तस्मिन्नेव परात्मनि ।
यथातीतादिकालस्तदुपाधिश्च क्रियादिमः ॥

अन्योन्यसंश्रयौ काले जीवाविद्ये तथात्मनि ।
एवं सति विकल्पेन ब्रह्मैवेश्वरशब्दितम् ॥

सर्वज्ञं सत्यसङ्कल्पं जगत्सर्गादिकारणम् ।
परोपाधिविकल्पेन यथा कालोऽविशेषणः ॥

भूतभव्यभवद्धेतुर्महाकाल इतीर्यते ।
स तया माययैवेशो भूतभौतिकवृत्तया ॥

सम्भिन्नात्मापृथक्त्वेऽपि सर्वात्मा वेत्ति सर्वशः ।
तेनैष सर्वोपादानं सर्वकर्तेति कीर्त्यते ॥

भूतभव्यादिसम्भेदात् कालः सर्वाश्रयो यथा ।
भूतं भवद् भविष्यद् वा कालो वा तदुपाधिकः ॥

नातियन्ति महाकालं तथाविद्यादिकं परम् ।
परमात्मा च सर्वेषामाधारस्तदवस्थितः ॥

अन्तर्यामी क्रियाध्यक्षो नानागुण उपास्यते ।
जीवः पुनरहङ्कारं शक्तिवृत्त्यनवस्थितम् ॥

क्लेशकर्माशयग्रस्तं तादात्म्येनाभिमन्यते ।
अहम्ममेति तेनासावविद्याकामकर्मभिः ॥

क्लिश्नाति सुखदुःखेषु नानायोनिषु संसरन् ।
कायेन मनसा वाचा परोपासनया तु सः ॥

प्रसन्नात्मा परात्मानमात्मानं प्रतिपद्यते ।
त्रिभेदनिह्नवाकारविकल्पपरिवर्तिनी ॥

अखण्डाकारनिष्पन्ना शाब्दवृत्तिरहङ्कृता ।
व्यञ्जयन्ती चिदात्मानं स्वयमप्युपशाम्यति ॥

सविकल्पावभासात्मा तया वृत्त्योपरञ्जितः ।
चिदात्मा भासतेऽथापि केवलः परिशिष्यते ॥

भावाभावविशेषाणामविशेषनिषेधतः ।
स्वात्मनोऽपि निषेधेन सा हि वृत्तिर्विकल्पिता ॥

ततस्तदुपरागेण तां वृत्तिमवभासयन् ।
तन्निषेधावसानत्वात् स्वयमेवावभासते ॥

तत् त्रिभेदनिषेधेन स्वनिषेधविकल्पिते ।
स्वरूपग्रहणे भात आत्मा जीवो न नेश्वरः ॥

सदानन्दप्रकाशात्मा सत्तामात्रोऽवशिष्यते ।
प्रागतः स्वप्रकाशोऽपि भासमानोऽपि सर्वदा ॥

नाविद्याग्रस्तनिर्भासश्चिदात्मा विरुणद्धि ताम् ।
प्रमावृत्तिचिदाभासा संविद्धयस्या विरोधिनी ॥

एवञ्च यदुक्तं संविद्रूपत्वेन[1] नाज्ञातं ब्रह्म विषयसंविद्वत् स्वतः प्रमाणतो वा[2] स्वरूपावभासाविशेषाद्, अप्रमेयतया च तवात्मनः स्वरूपमेवाज्ञानविरोधीति वाच्यत्वाच्चेति । तदुदस्तं, ब्रह्म न जानामीत्यनुभवबाधाद्, विपर्यस्तरूपावभासस्य च तदविरोधित्वाद्, अनुष्णाशीततया मण्यादिप्रतिहताग्नेयस्पर्शावभासस्योष्णिमानवभासाविरोधित्वदर्शनाद्, अप्रमेयस्यैव विपर्यस्तसमस्तरूपनिषेधविकल्पाविष्ट[3]स्वरूपावभासस्य तद्विरोधित्वोपगमाद्, अविषयतया सर्वथैवात्मनोऽतद्व्यावृत्तिमुखबोध्यत्वाद्, नेदं रजतमिति विपर्यस्तरूपनिषेधविकल्पाविष्टशुक्तिस्वरूपावभासस्यैव तदज्ञानविरोधित्वदर्शनाद्, अक्षादन्यतो वा शुक्तिरेषेत्यवभासस्यापि तद्धर्मत्वात् । शुक्तिकाज्ञानं तु तत्र विपर्यस्तरूपमिति तन्निषेधम-

---

१. 'यत्वेन सं', २. 'वा । रू', ३. 'विशिष्ट' ख. पाठः.

नपेक्ष्य तत्स्वरूपावभासो विरुन्धीत । अत एव तूलाज्ञानपक्षे आवरणभेदपक्षे वा शुक्त्यादौ तत्स्वरूपावभासात्मा तन्निवृत्तिः । अज्ञानावरणाभेदपक्षे च तद्विषयावच्छेदेन तदवभासप्रतिबन्धो वा । प्रतिबन्धश्च न तदुत्पत्तिविरोधः, अज्ञानाद्यवभासस्य नैसर्गिकत्वात् । किन्त्वज्ञानोद्वारकविषयावभासतैव । ब्रह्मणि तु स्वरूपावभासमात्रावसानोऽज्ञानादिबाध इति व्यवतिष्ठते । तस्यापि तद्विपर्यस्तरूपत्वात् । रजतादिनिषेधेन शुक्त्यादिस्वरूपावभासस्य तद्बाधत्वदर्शनात् । तादृशश्चाज्ञानादिनिषेधविकल्पाविष्टात्मस्वरूपावभासः प्रमाणाधीन एवेति न प्रागज्ञानादिविरोधः । स्वरूपेणात्मनोऽनवभासात् । एष च विद्याविद्ययोर्विशेषः, यदेकत्र स्वरूपेणात्मा भासते, अन्यत्र त्वविद्यादिविपर्यस्तरूपेणेति । प्रागागमिकात्मस्वरूपविज्ञानाच्च हेतुकं विकल्पामिथ्यात्वज्ञानं प्रत्यक्षादि तात्त्विकप्रमाणत्वाभिमानविघातेनागमिकात्मविज्ञानोत्पत्तावङ्गम् । न तु तदेव तत्त्वज्ञानं, वस्तुस्वरूपावभासानवधित्वात् । तदवधिकं हि तत्त्वज्ञानम् । तदिदमुदितं भाष्ये —

**"अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म । ब्रह्मावगतिर्हि पुरुषार्थः"**

इति । अत एव यावदवगतिपर्यन्तागमिकविज्ञानमात्मा सजातीयादिभेदविकल्पित एवावभासते निसर्गत इत्युपपन्नमनाद्यविद्याश्रयो ब्रह्मेति ॥

---

## अविद्यावरणम् ।

यदप्युदयनिरोधो वा प्रकाशस्य नाशो वा प्रकाशमात्रात्मनि नाविद्यावरणं सम्भवतीत्यादि, तदपि श्वश्रूनिर्गच्छोक्तिन्यायमनुहरते । उभयासम्भवस्यास्मदिष्टत्वात् । किन्त्वस्ति प्रकाशत इति व्यवहारसामग्र्यां सत्यां नास्ति न प्रकाशत इति व्यवहारयोग्यतापादनमेवावरणमिति प्राञ्चः । यद्यपि नैवंरूपत्वं घटादिविषयतमोवरणे शक्यमुपपादयितुं, तदस्तित्वादिव्यवहारसामग्र्यन्तर्गतालोकादिसत्त्वे नास्तित्वादिव्यवहारयोग्यतापत्त्ययोगात् । तदसत्त्वे च

---

१. 'नद्वारवि', २. 'भा', ३. 'स्वश्रुर्ग' ख. पाठः.

तत एव सेति तमोनिमित्तत्वाकल्पनात्। आत्मनि च तदस्तित्वादिव्यवहारसामग्र्यन्तर्गतस्वरूपावभाससत्त्वे नास्तित्वादिव्यवहारायोगात्, तदसत्त्वे च तत्राज्ञानानपेक्षणात्। अपिचैवं जगदान्ध्यप्रसङ्गः। नह्यात्मन्यनवभासमाने किञ्चिदवभासेत, 'तमेव भान्तमनुभाति सर्वमि'ति श्रुतेरिति। तथापि तदावारकत्वाभिमतविरोधीतरास्तित्वादिव्यवहारसामग्र्यमिति विवक्षितम्। तद्विरोधी चैकत्रालोकः। अन्यत्र तत्स्वरूपावभासमानम्। अविद्याविषये चात्मनो विपर्यस्तरूपावभास एवेत्यवोचाम। अथवा घटादावास्तित्वादिव्यवहारसामग्र्यां नालोकादिरन्तर्भवति तमोनिवृत्त्यान्यथासिद्धेः। न चालोकाभावमात्रं तम इत्यावेदितम्। तज्ज्ञानं च व्यवहारगृहीतमित्यतो घटादाविन्द्रियसन्निकर्षादिरेवास्तित्वादिव्यवहारसामग्री। चिदात्मनि च स्वरूपसत्तैव। सत्यां च तस्यां विपरीतव्यवहारयोग्यतापत्तिस्तमसाविद्यया वा न सामग्रीविरहादित्यालोकादागमिकविज्ञानाद् वा तन्निवृत्तौ यथावस्तुस्वरूपमवभासते। न च ज्ञानस्याज्ञानसमानविषयत्वमसुघटं, निरूप्यतायां अज्ञानुषङ्गावभासस्योभयत्रापि तुल्यत्वात्। घटज्ञानादावपि तदतिरिक्ततद्विषयत्वानिरूपणात्। अविद्योपादानस्यैवागमिकज्ञानस्याविद्यानिवर्तकत्वं नहि दृष्टेऽनुपपन्नं नामेति न्यायात्,

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः"

इत्यादिशास्त्रात् कदलीगर्भादिनिदर्शनाच्चोपपादनीयम्। अथवा स्वरूपावभास एव नित्योऽपि नैसर्गिकाविद्यावभासकतया तदनिवर्तकोऽपि नैगमाखण्डाकारवृत्त्यभिव्यक्तो निवर्तयेत्, तृणाद्यवभासकसूरकरनिकरस्यैव पतङ्गकान्ताभिव्यक्तस्य तद्दाहकत्वदर्शनात्। अरण्यनुगताग्नेरतद्दाहकस्यापि निर्मथनाभिव्यक्तस्य तद्दाहकत्वदर्शनाच्च। वस्तुतस्तु यावद्विशेषनिषेधविकल्पाखण्डाकारमानवृत्त्यभिव्यक्तस्वरूपावभासे बाध एवाविद्यादेरित्युक्तम्। न च प्रकाश इत्येवात्मन्यविद्यावरणासम्भवः। दृष्टत्वात्। अपवरकालोकादावन्धकारवदारोपसम्भवात्। अत एव प्रकाशमानेऽप्रकाशमाने वात्मनि नाविद्यावरणं सेद्धुमर्हतीत्यादि निरस्तम्। तदवभासात्मनैवातद्रूपेण प्रकाशमानत्वोपगमात्॥

---

## परमते अज्ञानविभ्रमानुपपत्तिः।

परस्य त्वात्माज्ञानं देहादिविभ्रमो वा न घटते। आत्मनः स्वस्वधर्म-

---

१. 'नि त' ख. पाठः.

व्यवहारानुगुण्यापादकत्वेन स्वयम्प्रकाशत्वोपगमात् । नित्यत्वाणुत्वादेरपि प्रत्यक्त्वानुकूलत्वाद्यविशेषेणागमजज्ञानानपेक्षणात् । नित्यत्वं हि ध्रुवत्वम् । 'त्यब्नेर्ध्रुवे' (वा० ४. २. १०४) इत्यनुशासनात् । स च स्वभावो न त्वौपाधिकः । नहि सर्वकालवृत्तित्वं काले कालातीतात्मनि वा सम्भवति । तथाचात्मना वागमिकज्ञानेन वा तत्त्वावभासाविशेषादज्ञानविभ्रमविरोधः । न चात्मासाधारणतया ज्ञानादिधर्मानवभासादविरोध इति वाच्यम् । सामग्रीसत्त्वे तथानवभासासम्भवात् । स्वयम्प्रकाशो ह्यात्मा स्वधर्ममात्रमवभासयति, तदसाधारण्यावभाससामग्री तु धर्मभूतज्ञानप्रसरलक्षणा नागमेन विनेति चेत् । कुतः पुनः स्वभावादेव तदवभासज्ञानप्रसरो न भवति । देहादिसम्भेदाध्यासप्रतिबन्धादिति चेद्, अध्यासस्यैव ज्ञानादेरात्मासाधारण्यानवभासमूलत्वेनान्योन्याश्रयः । सुप्तादावध्यासोपरमेणात्मासाधारणतयैव तदवभासापत्तौ पुनरध्यासविरोधेनानादित्वानुपपत्तेः । न चाध्याससंस्कारस्तत्त्वावभासविरोधी, सत्यपि तस्मिन् शुक्त्याद्यसाधारणतया शुक्तित्वाद्यवभासात् । एतेन कर्माविद्यया तत्त्वावभासप्रतिबन्धो व्याख्यातः । तस्यापि भ्रमसंस्कारतुल्यत्वात् । 'देहयोगाद् वा सोऽपि' (ब्र० ३. २. ६) इति न्यायविरोधाच्च । कर्माविद्यातिरोधानस्मरणं च देहयोगद्वारेति व्याख्याम ।

अपिच न 'अविद्या कर्मसंज्ञान्ये'ति कर्मैवाविद्योच्यते, किन्तु कर्मणः संज्ञालक्षणभूता या, कर्म वा संज्ञा यस्याः सा, कर्मनिमित्तनानादेहयोगलक्षणा ।

"तमसा बहुरूपेण वेष्टिताः कर्मयोनिना"

इति मानवे विशेषणात् । अत्रापि प्रकरणे

"श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन!"

इति प्रक्रम्य,

"अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः"

आविद्येति देहादावहंममाभिमानरूपत्वोपक्षेपात् । नित्यस्य ज्ञानद्रव्यस्य स्वतोऽस्वप्रकाशत्वे तिमिरस्येवावस्थाभेदेनापि स्वप्रकाशता न स्यात् ।

---

१. 'ध्या' ख. पाठः.

प्रकाशस्य च तिरोधानं स्वरूपनाश एव प्रसज्येत, सत्याश्रये प्रकाशगुणस्यैवोदयाप्ययासम्भवात् । नित्यज्ञानावस्थाभेदं च निरास्थाम । तत्र सङ्कोचरूपमवस्थान्तरमविद्यया तिरोधानम् । अतो ज्ञानस्यात्मासाधारणधर्मत्वानवभास इति दुरुक्तम् ॥

---

## असाधारण्यविवेकः ।

अपिच किमिदमसाधारण्यमात्मधर्मस्य यत्रात्मरूपज्ञानं न सामग्री यस्य चाविद्यातिरोधानादनवभासः । यदि धर्मान्तरं, तस्य तदतद्धर्मसाधारण्ये तद्रूपेण तद्धर्मवत्त्वज्ञानस्यात्मनि विभ्रमविरोधित्वायोगः । नहि शुक्तित्वरजतत्वसाधारण्येन मेयत्वेन शुक्तित्वावभासेऽपि रजतभ्रमो निवर्तते । तस्यापि धर्मान्तरेऽसाधारण्ये तद्साधारण्यमन्तरा तदाश्रयसाधारण्यापत्त्या मूलधर्मसाधारण्यप्रसङ्गेन तस्य तस्यान्यदन्यदसाधारण्यं धर्म इत्यप्रामाणिकमनवस्थानं, संस्थानिवित्तिवेद्यसंस्थानावभासमात्रस्य स्वस्वाश्रयान्यात्म्यविभ्रमविरोधित्वोपगमविरोधश्च । अथातद्व्यावृत्तिरसाधारण्यम्, आत्मधर्मेष्वनात्मव्यावृत्तिर्न स्वरूपादतिरिच्यते । ततश्च तद्रूपव्यवहारे परं प्रतियोगिज्ञानापेक्षा न तदवभास इति त्वदभ्युपगमेनात्मनैव तदवभासप्राप्तौ देहाद्यात्मत्वविभ्रमासम्भवः । तस्मात् सत्यामपि सामग्र्यामनवभासे हेतुरन्वेषणीयः । तत्र बाह्ये विषये प्रमातृकरणविषयदोषरागकाचचाकचक्यादयः सम्भवन्ति । चिदात्मनि तु प्रकाशकेऽनाद्यविद्यैव दोषोऽभ्युपगन्तव्यः, गत्यन्तराभावात् । सा च चिदात्मनः स्वरूपावभासं प्रतिबध्नाति । अवभासमानमेवात्मानं स्वस्वविलासविकल्पेनोपरञ्जयति । अज्ञानाकारावभासता च तद्विषयता । तद्योग्यता चावरणमात्मनोऽविद्यासम्बन्धात्मानादिसिद्धेति ॥

---

## अनवस्थोद्धारः ।

सा च दृश्येत्यपरमार्थ एव । यत्त्वेवं कल्पनामूलदोषसापेक्षत्वेनानवस्थेति । अस्तु तावदनवस्था । को दोषः । अप्रामाणिकी कल्पना स्यादिति चेद्, नन्वात्मतत्त्वावबोधापेक्षया सर्वापि कल्पना विभ्रम इत्युपगम्यत एव ।

१. 'दसा' ख. पाठः.

किमत्रापादनीयमप्रामाणिकी कल्पना स्यादिति। तुल्यरूपकल्पितानन्तदोषाविविक्तावभासस्यापि विभ्रमत्वात्। न चैवमधिष्ठानानुपपत्तिरपि मा स्म दुष्यदिति माध्यमिकमतेऽपि माध्यस्थ्यं युक्तमिति शङ्क्यम्। बाधस्य सावधित्वेन तदनवस्थानुपपत्तेः। बाधावधिश्च अधिष्ठानं तत्त्वम्। तत्तु शून्यमन्यद्वेत्यन्यदेतत्। किन्त्वाम्नायप्रामाण्यात् सर्वत्र सत्ताबोधावधिबाधाच्च सत्तासंविद्रूप आत्मैवाधिष्ठानमिति वयं ब्रूमः।

अपिच अविद्याकल्पनाया अनादित्वेन तन्मूलदोषान्तरानपेक्षायां क्वानवस्था। न च काल्पनिकस्यानादित्वमेव दुर्घटम्। सत्त्वस्येव काल्पनिकस्यापि सादित्वेऽप्रयोजकत्वात्। अनादित्वस्य धर्मिग्राहकमानसिद्धतया बाधाच्च। न च काल्पनिकत्वे सादित्वप्रसङ्गादकाल्पनिकत्वं जगदुपादानोपाधित्वाभिमतस्य साधनीयमिति वाच्यम्। काल्पनिकत्वस्य सत्त्वस्य वा सादित्वानादित्वयोरप्रयोजकत्वादेव प्रसङ्गादनुमानस्याप्यसम्भवात्। अत एव कल्पितत्वादविद्यायां दोषमूलत्वानुमानमुदस्तम्। बाधेन कल्पितत्वोपपत्तावप्रयोजकत्वात्। कल्पितत्वे सति सादित्वे परमुभयरूपानुगुण्येन दोषो हेतुरित्यवस्थाप्यते। न च विशिष्टादेकदेशस्य लाघवेन कल्पितत्वमेव दोषमूलत्वप्रयोजकत्वमिति युक्तं, सादित्वस्यापि तथैव तत्प्रयोजकत्वापत्तावतिप्रसङ्गात्। अतः सादित्वे सति हेत्वपेक्षायां कार्यानुकूलहेतुव्यवस्थानात् काल्पनिके कार्ये दोषो हेतुरिति व्यवस्थामात्रमिति सादित्वासिद्धेरविद्याया मूलस्यैवाकल्पनीयत्वान्नानवस्थेति। ननु जीवभावादेरनादेरपि दोषमूलत्वमिष्यते भवता। न। कल्पनायौगपद्यात्। सहबाध्यत्वेनाविद्याधीनस्थितिकत्वमात्रोपगमात्।

अपिच कल्पनैकशरीरायामविद्यायां कैवानुपपत्तिश्चोद्यते, यथानुभवं कल्पितरूपोपगमात्। अन्यथा कथं शुक्तौ रजतं कथं तदकार्यकरं कथं प्रत्यक्षमिति चोद्यानवस्थितेः। तत्र यदि कुतोऽपि लिङ्गाभासादविद्याया दोषमूलत्वं विचिकल्पयिषितं, विद्यायामप्यवस्थानं मुक्तावारकत्वं च कामं विकल्पय। अथानवस्थया परावविवर्तिषितं विरोधेन बाधेन च कामं परावर्तस्व। अविद्यालम्बना हि सर्वापि कल्पनैव। तत्र चोपपत्त्यन्वेषणमनर्थकम्। एतेन यदनृतं तद् दोषमूलमित्युपपत्तिनिरपेक्षत्वेऽनृतजगन्मूलाविद्यादोषो न कल्प्येतेति प्रलापः, सादिकल्पनाया दोषमूलत्वकल्पनात्। कल्पना पुनरधिष्ठानापेक्षानियता, बाधावधित्वात्।

अन्यथा कल्पनात्वातिपातात्। न च सर्वमसदिति बोधस्य स्वस्याप्यसत्त्वावेदक-शून्यपरिशेषो बाधः स्यादिति वाच्यम्। सर्वस्यापि प्रमाणस्य सदालम्बनत्वेन प्रमाणतः शून्यपरिशेषासिद्धेः। अभावप्रमाणवादेऽपि तस्य सदधिकरणालम्बनत्वात्। सर्वविशेषातिवर्तिनः सदात्मकस्यैव शून्यसंज्ञकस्याधिष्ठानत्वोपगमे च नाममात्रविवादः स्यात्। अपिच स्वपरव्यवहारानुगुण्यापादकत्वमिव ज्ञानस्याज्ञानस्यापि स्वपरकल्पनात्वोपपादकत्वमस्तु, न दोषमात्रस्य स्वपरनिर्वाहित्वमित्यनतिप्रसङ्गात्। न चैवमधिष्ठानान्तरमनपेक्ष्यानादिकल्पनाया एव स्वपरनिर्वाहकत्वं शक्यशङ्कं निरवधिबाधानुपपत्तेरेव। न च स्वस्मिन्नेव स्वयं बाध्यते, विरोधात्। अपिच शून्याधिष्ठानत्वेऽभावानुविद्धा कल्पना स्यात्। सदनुविद्धा तु कल्पना, घटः सन् पटः सन्नित्याद्यनुभवात्। एवञ्च औपनिषदमते माध्यमिकमतप्रतिबन्द्युपादानं तान्त्रिकस्य वैदिकमहाजनबहिष्कृतस्य माध्यमिकमैत्रीपरिशीलनमात्रमिति॥

---

## अनिर्वचनीयत्वोपपत्तिः।

यदप्यनिर्वचनीयत्वानुपपत्तिरविद्यायाः सर्वप्रतीतीनामेव सदसदन्यतराकारत्वादित्यादि, तदप्ययुक्तम्। नह्यस्तित्वप्रत्ययविषयो[१] लब्धात्मकत्वं सत्त्वमसत्त्वं वा नास्तित्वप्रत्ययविषयो निषेधप्रतियोगित्वमनिर्वचनीयत्वशरीरनिविष्टमिष्टं, येनास्तीति बोध्ये निषेध्ये च नास्तीति सदसद्विलक्षणत्वलक्षणमनिर्वचनीयत्वमवचनीयं स्यात्। किन्तु बाधायोग्यस्वरूपत्वं सत्त्वम्, असत्त्वं च निःस्वरूपत्वम्। तद्वैलक्षण्यं चानिर्वचनीयत्वमस्तिनास्तिबोधौ न विरुन्धः। ब्रह्मणश्च बाधायोग्यत्वलक्षणं सत्त्वं 'सत्यं ज्ञानमनन्तं ब्रह्म', 'अस्तीत्येवोपलब्धव्यः', 'सत्तामात्रमगोचरम्' इत्यादिना गम्यते, निस्स्वरूपत्वरूपं चासत्त्वं खपुष्पादेः निरुपाख्यत्वात्॥

---

## जगद्ब्रह्मणोर्बाध्यत्वाबाध्यत्वे।

ननु ब्रह्मणोऽन्यस्य वास्तीत्येवोपलब्धावेकं बाध्यते नान्यदिति को हेतुः। आपणे शुक्तौ वा रजतमित्येव मित्यविशेषे किञ्चिद् बाध्यते नान्यदित्यत्र

---

१. 'य्योपल' ख. पाठः.

वा को हेतुः । ननु शुक्तिरूप्यादौ प्रवृत्तिविसंवादो बाधहेतुः । नन्वर्थान्यथात्वज्ञानं प्रवृत्तिविसंवादो वा बाधबोधे हेतुः न बाध एव। अबाधितस्वभावस्य हेतुतो बाधायोगात् । भ्रमगृहीतत्वादेकं बाध्यत इति चेत्, कुतः पुनरेकत्र भ्रमो नान्यत्र। विषयबाधादिति चेत्। ननु तव भ्रमगृहीतत्वेन विषयबाध इत्यन्योन्याश्रयः । अपिचैवं यादृच्छिकसंवादिविभ्रमगृहीतमपि बाध्येत, भ्रमगृहीतत्वाविशेषात् । अत एव दोषानुषक्तबोधसामग्रीकत्वमपि निरस्तम् । तस्माद् विषयरूपस्य प्रमाणव्यवस्थाप्यतया यत्र बाधकं प्रमाणं तद् बाध्यते नान्यदिति व्यवस्थिते ब्रह्म बाधकमानाभावादबाध्यम्, अन्यत् तु बाध्यमित्युपपन्नम् । अविद्यादि च 'अथो अविदितादधि', 'नेति नेत्यात्मे'ति यावदविद्यादिविशेषनिषेधशेषतयात्मोपदेशेन बाध्यते । प्रत्यक्षादीनि च प्रपञ्चबाधकान्युपन्यस्तानि प्रत्यक्षादिदोषमूलत्वसम्भावनाहेतूपपादनप्रस्तावे । एवञ्च यद् बाध्यत्वमध्यवसीयते तन्नाम सद्विलक्षणत्वम् । यच्चास्तीति लब्धा(क ? त्मकत्व)मुपलभ्यते तदेवासद्विलक्षणत्वमिति, तदात्मकमनिर्वचनीयत्वमेव ख्यातिबाधावसेयमिति नान्यावभासेऽन्यविषयत्वातिप्रसङ्गः । अत एव सत्त्वसहेऽपि सदसद्वैलक्षण्ये न वस्तुसत्त्वाङ्गीकार इति । न च सदसदात्मकत्वमेव ख्यातिबाधाभ्यामवसीयताम्, अस्तिनास्तिबोधानुरोधादिति वाच्यम् । लब्धात्मत्वे सति निस्स्वरूपत्वस्याबाध्यत्वे सति बाध्यत्वस्य वा विरोधेनासम्भवात् । कालभेदादस्तित्वनास्तित्वाविरोध इति चेद्,

"नासतो विद्यते भावो नाभावो विद्यते सतः"

इति भगवद्दर्शनविरोधः ।

अपिच बाधो हि प्रतिपन्नारोप्यसत्त्वसमयावच्छेदेन तदुपाधावेव तस्य नास्तित्वप्रत्ययो न भिन्नकालसत्त्वालम्बन इति युक्तम् । न च सदसद्वैलक्षण्यमपि सत्त्वासत्त्वपर्यवसन्नमेवेति तवापि विरोध इति वाच्यम् । असद्वैलक्षण्यस्य बाध्येऽपि सम्भवेन विवक्षितसत्त्वापर्यवसानात् । असतो निरुपाख्यस्य सद्वैलक्षण्यातिरिक्तवैलक्षण्यानिरूपकत्वाच्च । न चासतः सालक्षण्यं केनापि वैलक्षण्यं वा लक्षयितुं क्षमन्ते प्रेक्षावन्तोऽपि । अत एव कैश्चित् सदन्यत्वमेवानिर्वचनीयतोन्नीयते । तमेव तु सत्त्वनिषेधमसत्त्वेन सदसत्त्वेन

च विकल्प्य प्रपञ्चयन्ति प्राञ्चः न सन्नासन्नापि सदसदिति सत्त्वनिषेधे मा भूदसत्त्वविभ्रमः सदसत्त्वविभ्रमो वेति। यत्त्वेवं पूर्वोत्तरपक्षमूलविरुद्धप्रतिपत्त्या ब्रह्मणो भेदानां वा सविशेषत्वाविशेषत्वादि[1]वैलक्षण्यं सत्त्वानिर्वचनीयत्वादिवैलक्षण्यं वापद्येतेति। न च वैलक्षण्यप्रतियोगितया निर्विशेषमनिर्वचनीयं वा किमपि स्यादिति शङ्क्यम्। विनापि तेनासतैव तद्विकल्पोपपत्तेरिति। तन्न। विरुद्धोभयरूपस्य तुल्यप्रतिपत्तित्वे संशयेन तदुभयवैलक्षण्यासिद्धेः। अन्यतररूपावधारणे चारोप्यरूपनिषेधेन निर्विशेषत्वादिरूपपरिशेषात्। नहि वयं प्रतीतरूपवैलक्षण्यं शुक्तिरूप्यादौ निरूपयामः। किन्तु प्रतीतरूपमेव सदसद्वैरूप्यमिति न विरुद्धोभयप्रतीत्या तद्वैलक्षण्यप्रसञ्जनमाञ्जसम्। अथवा ख्यातिबाधान्यथानुपपत्त्या सदसद्वैलक्षण्यमाक्षिप्यते, सच्चेन्न बाध्येत, असच्चेन्नाध्यक्षेतेति। न च निर्विशेषं चेद् ब्रह्म सविशेषं न प्रतीयेतेत्यादि शक्यशङ्कं, येन तत्प्रतीत्या निर्विशेषवैलक्षण्याद्युत्प्रेक्ष्येत। अतद्रूपविकल्पो ह्यवकल्पते। हन्तैवमसत्येव सत्त्वं विकल्प्येत सति वा असत्त्वम्। न। निर्विषयारोपायोगाद्, रूप्यादेरप्रतीतौ प्रतीतौ वा निरुपाख्यत्वख्यानायोगाच्च। न च प्रतिपन्नोपाधौ त्रिकालनिषेध्यत्वरूपबाध्यत्वपर्यायमसत्त्वं पारिभाषिकमनिर्वचनीयस्योदसनीयम्। प्रत्ययार्हत्वादिलक्षणभावत्वापरपर्यायं वा सत्त्वम्। न चामू विरुध्येते। निरुक्तसत्त्वस्य बाध्यत्वोपपादकत्वात्। यथाहुः—

"लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य सम्भवः॥"

इति॥

---

**अन्यथाख्यातिमते ख्यातिबाधायोगः।**

यत्तु सत्ख्यातेरन्यत्रान्यथाख्यातिरवर्जनीयेति तत्र ख्यातिबाधोपपादनं, तत् कुतर्करसिकसबहुमानावलोकनलिप्साविलसितमात्रम्। नहि रूप्यं निषधायामेव विद्यमानं दोषादिह प्रतिपद्यापोद्यत इत्यनवद्यं, प्रमातृसंविदभेदमनापाद्य दोषस्य तदध्यक्षयितुमक्षमत्वात्। मातृसंविदभिन्नसतश्च तदभेदस्तदाकारवृत्तिसम्बन्धनिबन्धनः।

---

१. 'दिति वै' ख. पाठः.

असन्निकृष्टे चारोप्ये वृत्तिर्दुष्टाक्षजा कथम् ।
तदाकाराप्यसम्बन्धा मातृसंविदभेदकृत् ॥
सन्निकर्षविशेषोऽसौ दोषश्चेदिन्द्रियस्य ते ।
विभ्रमो दोषजन्मेति कार्यकारणताक्षतिः ॥
दोषादसन्निकृष्टेऽपि यद्यध्यक्षं क्षमेत ते ।
अनल्पा कल्पनीया स्याद् दोषशक्तिरयुक्तिका ॥
एषां प्रकृतकार्यस्य प्रतिबन्धे परा भ्रमे ।
अन्यासन्निहितेऽप्यर्थ इन्द्रियस्य प्रवर्तने ॥
अस्माकं पुनराद्यैका पराविद्याविवल्गने ।

तावतैव विज्ञातविषयसम्भेदेनैवाविद्याविवर्तनात् तदवभासि तदेव विज्ञानं विभ्रम इति न दोषशक्तिं तृतीयां प्रतीयाम । न च संसृष्टानुभूतस्यापि संस्कारस्तत्संसृष्टप्रत्यक्षे प्रत्यासत्तिः । अदृष्टदण्डे दण्डी पुरुष इति प्रत्यक्षापत्तेः । अथ प्रत्यभिज्ञानमिव संस्कारेन्द्रियाभ्यां रूप्यशुक्तिविषयमेकं ज्ञानं जायते, तस्य तदुभयसम्भेदाविषयत्वमन्यथात्वमिति चेत् । न । इदं रजतमिति ज्ञानाकाराविशेषे विषयवैषम्यकल्पनमयुक्तमित्यादि ह्यन्वशिषामाख्यातिनिरासे । एतेन रजतत्वस्येदमर्थस्य च विशेषणविशेष्यभावोऽन्योन्यानिरूप्यत्वभेदाग्रहेण गृह्यत इति कल्पना युक्तिग्राह्या व्याख्याता ।

तत्रान्योन्यनिरूप्यत्वसंसर्गो यदि गृह्यते ।
शुक्तौ रूप्यत्वसंसर्गग्रहस्ते किं विराध्यति ॥
तदग्रहे कथं ग्राह्या विशेषणविशेष्यता ।
नहि वस्तुस्वभावोऽसावन्याधीननिरूपणा ॥

इति ।

आपिच

अत्रस्यन् रूप्यमात्रस्य न बाधं बुध्यतेऽसतः ।
शुक्तिसम्भिन्नवृत्तं तद् वार्तयापि न सत् तव ॥
असतो नहि बाधो वा बोधो वा बुधितो बुधैः ।

---

१. 'का' ख. पाठः.

भवतोरप्यसम्भिन्नशुक्तिसम्भेदरूप्ययोः ॥
बोधे बाधे च सा ख्यातिर्व्याख्याता पदकान्तरे।
शुक्तौ रजतसम्भेदनिषेधो नहि बाधनम् ॥

आरोपितं हि बाध्यते, शुक्तिसम्भेदेन च रूप्यमारोपितम्। न रूप्ये शुक्तिसम्भेदः। न वा शुक्तौ रूप्यसम्भेदः। अपरोक्षत्वायोगाद्, आरोप्यस्य[1] विषयवैशिष्ट्यभाननियमेन रूप्ये शुक्तौ वा तद्वैशिष्ट्यभानस्यानुभवबाधितत्वाच्च। न च शुक्तिसम्भेदः प्रतियोगिनमनाघ्राय प्रतिषेधग्राह्यो भवति, पृथगिदं न सम्भवतीत्यनभिसम्बन्धात्[2]। न च रजतसामान्यमैतदात्म्येन व्यधिकरणेन निषिध्येत, व्यधिकरणधर्मावच्छिन्नाभावो हि सर्वस्य सर्वदा सर्वत्रेति न बाधो व्यवतिष्ठेत। न च रजतसामान्यमारोप्यमपरोक्षस्य विशेषविषयत्वात्। न च रजतभेदरूपत्वाधिगतचतुरश्रादिविशेषः शुक्तीयतया विविच्यते। न रजतं चतुरश्रं शुक्तिशकलं त्वित्यप्रतीतेः, सह रजतेन बाधोपपत्तेश्च। यद्यप्येवं मृषैकनिरूप्यतयारोप्यविशेषाभावोऽपि मृषेति तत्सहभावविरोधो बाध्यबाधकाव्यवस्था वापद्येत, तथापि नेदं रजतमिति न विशिष्टनिषेधः, निरवधिनिषेधानुपपत्तेः। किन्त्विदमित्यवधिमवगृह्य रजतसामान्याविरोधिरूपोपस्थितिसामग्रीमहिम्ना तदुपाधावारोप्यानुगतसामान्यावच्छिन्ननिषेधे[3] तदारोप्यं विधिनिषेधानर्हतालक्षणं बाधमापद्यते। स्वोपाधौ स्वप्रतीत्यनुबन्धिसत्त्वसमयाभावप्रतियोगितावच्छेदकरूपवत्तया मिथ्या चेत्युपपन्नम्। न चानिर्वचनीयेऽपि सत्त्वबुद्धिरन्यथाख्यातिः, बाध्यत्वस्य स्वरूपसत्त्वस्य चानिर्वाच्यत्वशरीरत्वात्। तदेव हि तस्य सदसद्वैलक्षण्यमिति प्रण्यगादिष्म। तस्माद्

अन्यथाख्यातिरेवेयमन्यथाख्यातिवादिनः।
बोधबाधविरोधेन दुःस्थिता ह्यन्यथामतिः ॥

---

## अनिर्वाच्ये ख्यातिबाधोपपत्तिः।

यत्पुनरनिर्वचनीयवाद एव ख्यातिबाधानुपपत्तिः विषयासम्भवादिति। तत्र वदामः — उपलभ्यमानो हि कथमपि विषयो निर्वाह्यः। गत्यन्तराभावेन चानिर्वचनीयस्य सादित्वेन सोपादानत्वेऽन्वयव्यतिरेकपरिशे-

---

१. 'स्व', २. 'त्यस', ३. 'षेधानर्ह' ख. पाठः.

षाभ्यां प्रमातृकरणविषयदोषसंस्कारादिसचिवाधिष्ठानतत्त्वाज्ञानोपादेयत्वोपपत्तेः। अत एव तत्प्रतीतिहेतुकत्वदूषणमनुक्तोपालम्भः। न चैवं दोषो[1] वाविद्या वा स्वाश्रयेऽपि तदर्थकार्यं कुर्यात् सम्बन्धाविशेषादिति वाच्यम्। नह्यसौ निर्बन्धः स्वसम्बन्धादर्थकार्यं करोतीति, किन्तूपलब्धकार्यानुकूलमूलकल्पनामात्रम्। आरोपे सति निमित्तानुसरणमिति न्यायात्। अत एव दोषगुणभावस्य कार्यगम्यतयान्यदापि न तदर्थकार्यप्रसङ्गः। कार्योन्नेयधर्मा यथाकार्यमुन्नेया इति हि न्यायविदः।

यत्तु दोषः स्वप्रतिबध्यप्रमितिसजातीयं विभ्रममेव जनयेदिति। तन्न। अवभासमानाधिष्ठानसम्भेदेनारोप्यस्य तदवभासातिरिक्तविभ्रमाभावात्। अधिष्ठानावभासस्य च तवापि दोषानिमित्तत्वेन तस्य भ्रमहेतुत्वानिर्वाहात्। नहीदमिति प्राथमिकादाक्षावभासादन्यो विभ्रमः, तस्यैव रूप्यसम्बन्धे रूप्यावभासतोपपत्तेः। विषयालोकस्यैव स्वसम्बन्धिस्वविषयसंयोगावभासत्वदर्शनात्। तस्माद् दोषो विषयतत्त्वज्ञानसामग्र्यावमीदन्तीमविद्यामुत्तभ्नन् विपरीतपरिणामोन्मुखीकरोतीति रजतादौ कारणमुच्यते, मृदं घटादिपरिणामोन्मुखीकुर्वन् दण्डादिरिव घटादौ। स चाविद्यको रजतादिरक्षादिभिरवभासमानाधिष्ठानसम्भेदेनैव सम्पद्यत इति दोषस्य विभ्रमान्वयव्यतिरेकान्यथासिद्धिः। अपिच दोषप्रतिबध्यसाजात्यानियमाद् यथाकथमपि साजात्यस्य सर्वत्र सम्भवात् प्रतिबध्यप्रमात्वादिसाजात्यस्य भ्रमेऽप्यसम्भवान्न दोषस्य भ्रमहेतुत्वव्यवस्था शक्याश्रयितुम्॥

---

## दोषस्य भ्रमाहेतुत्वम्।

अथ परोक्षेऽधिष्ठानावभाससम्भेदेनारोप्योपजने पर्वतादावारोप्यवह्न्यादेरपरोक्षत्वप्रसङ्गः। न च तदवभासासम्भेदेन तदुपजनः। प्रातीतिकत्वविरोधात्। न चारोप्यावभासविभ्रमो दोषमूलोऽन्य इति युक्तं, विषयैकावभासता हि न स्यात् पर्वतोऽयं वह्निमानिति। तत्र भ्रमहेतुत्वावश्यम्भावे च दोषस्य नार्थहेतुतापि गौरवादिति चेत्। एवं परस्यापि पर्वतादौ किमिति न

---

१. 'षादिवा' ख. पाठः.

1796

वह्निरपरोक्षः स्यात् । दोषसान्निध्यादिन्द्रियस्यासन्निहितापरोक्षसामर्थ्योपगमात्, सति विशेषदर्शने संशयोत्तरप्रत्यक्षानुरोधेनानुमितिसामग्रीतः प्रत्यक्षसामग्र्या बलवत्त्वात् । अथ दोषाभावे यद्रूपं सदपरोक्षतायोग्यं, दोषे सति तदेवासदपरोक्षभ्रमविषयः । न च दोषाभावे गिरेरग्निमत्त्वं सदप्यपरोक्षतायोग्यं, व्यवधानात् । इदमर्थस्य तु तथा रजतत्वमिति तद्भ्रमोऽपरोक्ष इति चेत् । अस्माकमपि दोषाभावे यद्रूपमध्यक्षयोग्यं तदेव दोषे सत्यज्ञानपरिणामरूपं सदध्यक्षमिति व्यवतिष्ठताम् ।

एवमपि दोषस्य पृथक् परोक्षभ्रमहेतुत्वमनपवादम्, अनुमितिसामग्रीसहकारित्वात् । अन्यथा आक्षविषयावभासरूपप्रमातृसंवित्सम्भेदारोपादग्निमत्त्वं पर्वतादावपरोक्षमापद्येत सुखशुक्तिरूप्यादिवत् । किमतो भोः, अपरोक्षेऽपि भ्रम एव दोषो हेतुर्नार्थ इति चेत् । किमेवं दोषत्वाद् भ्रमहेतुत्वमाशंससि, आहो भ्रमत्वाद् दोषजन्यत्वम् । आद्ये साध्यसमत्वं, तव भ्रमहेतुत्वातिरिक्तदोषत्वानिरुक्तेः । प्रकृतकार्यापोहेन विपरीतकार्यानुकूलत्वस्यातिप्रसङ्गात् । वेत्रबीजभस्मनैव सम्भवति कदलीकन्दले न दाहः प्रयोजकः, व्यवधानात् । भस्मकं च न प्रकृतकार्यविरोधि, बह्वशितादिपचने मिताशितादिपचनान्तर्भावात् । अतो नातिप्रसङ्ग इति चेत् । हन्तैवमनन्यसाधारण्याल्लाघवेन भ्रमहेतुत्वमेव दोषत्वमस्तु, किमन्येन गुरुणा । द्वितीयेऽपि यदि भ्रमत्वं दोषजन्यज्ञानत्वं, साध्यसमत्वम् । यदि विसंवादिप्रवृत्तिजनकत्वमुपेक्ष्यभ्रमादावसिद्धिः । अपिच ज्ञानं प्रवृत्तिमेव जनयति । तत्संवादविसंवादौ च विषयभावाभावाधीनौ । तथा च सद्विषयज्ञानादेव प्रवर्तमानस्य तत्कालविषयपरिमोषे प्रवृत्तिविसंवादात् तज्ज्ञानस्यादोषहेतुत्वाच्चानैकान्त्यम् । न च बाधितविषयज्ञानत्वाद् दोषजन्यत्वमनुमेयम् । बाधकमानाभावे यदृच्छासंवादिनो दोषजन्यत्वेऽपि विषयाबाधात् । तद्भावे च दोषजन्यत्वमन्तरापि बाधितविषयत्वोपपत्तेः, यथाविद्याभ्रमादावस्माकम् । अत एव वक्ष्यमाणप्रमाणैरविद्याभ्रमसिद्धौ तत्र व्यभिचाराच्च । तस्माद् दोषस्य स्वकार्येऽनुगतशक्तिनियामकरूपाभावात् कस्यचित् स्वपरनिर्वाहिका शक्तिर्यथाविद्यादोषस्य । कस्यचिदर्थमात्रे यथाध्यक्षे दोषस्य, भ्रमस्वरूपान्यथासिद्धेः ।

१. 'तुमा', २. 'म' ख. पाठः.

कस्यचिद् ज्ञानमात्रे यथा असच्छब्दादिजज्ञानहेतुदोषस्य,

"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि"

इति न्यायेन परोक्षभ्रममात्रस्य निर्विषयत्वात् । सोऽयं विकल्पः साङ्ख्यैराख्यायते 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति ॥

---

## परोक्षभ्रमस्यानिर्वाच्यविषयत्वम् ।

एवं सत्यपरोक्षभ्रमसविषयत्वे वा को हेतुः । अत्रापि ज्ञानमात्रादेव विसंवादिप्रवृत्त्युपपत्तेः । अपरोक्षज्ञानस्य सविषयत्वनियमादिति चेद्, न । भ्रमान्यत्र परोक्षज्ञानस्यापि सविषयत्वनियमेन धूमनीलस्येव वह्नौ ज्ञानापरोक्ष्यस्य सविषयत्वेऽप्रयोजकत्वात् । असच्छब्दजज्ञानस्यापि घटादिनिषेधे भावमात्रप्रतियोगिकत्वारोपेण कथञ्चिदर्थाविनाभावात् । अत एव खपुष्पं भवत्सिद्धान्त इत्युपमीयते, अन्यथा तत्रारोप्याभावे निर्विषयोपमानायोगात् । तथाच परोक्षे सविषय एव विभ्रमे दोषो हेतुः, विशिष्टशक्त्युपपत्तेरिति वयं पश्यामः । एतेन परोक्षभ्रमोऽन्यथाख्यातिः । तस्यानिर्वचनीयविषयत्वे मानाभावादिति निरस्तम् । भ्रमत्वादेवापरोक्षभ्रमवत् तदनुमानात् । असन्निकृष्टापरोक्षवदिन्द्रियस्य दोषसचिवस्यापि पक्षधर्मताज्ञानस्यातद्धर्मानुमितावसामर्थ्यात् । न चैवं शुक्तावजनि रजतम(ने ? न)शदिदानीम् इदमग्रे रजतमासीदित्यादिप्रत्ययापातः, नेदं रजतमिति बाधस्यैव तज्जनिनाशादिधीविरोधित्वात् । नहि निषेधबोधस्य नाशादिधीविरोधित्वे परस्याप्यसम्प्रतिपत्तिः । न च तत्र विषयविरोधो विशेषः, मिथ्याभावाभावसहभावेऽपि प्रात्ययिकबाध्यबाधकभावस्यात्रापि भावात् । अत एव रजतमिदं न रजतं चेति प्रतीतिरनापाद्या, बाध्यबाधकतया विरोधात् । एवं दोषादेरन्वयव्यतिरेकाभ्यामेव भ्रमविषयहेतुत्वे पापसंसर्गिनिदर्शनस्य सम्भावनार्थत्वादनतिप्रसङ्गः ।

यत्तु सर्वोपलम्भप्रसङ्ग इति, तन्न । अभ्रान्तस्य विषयतत्त्वावभासेनारोप्यबाधात् । उष्ण[1]ाध्यक्षश्रुतिलिङ्गादावप्राप्तबाधसम्प्रतिपत्तेः । तथाप्येकस्य भ्रमदशायामपरस्य यावदिदमित्युपस्थितिरेव रजतापरोक्षं किं न स्यात् । अन्यथाख्यातावप्येकस्य पीतशङ्खभ्रमदशायामन्यस्यापि स किं न स्यात् । तमन्यं

---

१. 'ष्णो' ख. पाठः.

प्रति वा शङ्खस्य पित्तद्रव्येण हेम्नेव रूपितत्वाविशेषात्। तस्य परं प्रत्ययोग्यत्वमुपलब्धिव्यवस्थाप्यामिति चेत्, तदनिर्वाच्यस्याप्यस्तु। तद्योग्यताप्रयोजकं च पित्तद्रव्यस्य तदीयत्वं तदुपादानाज्ञानस्यापि समानम्। तदीयत्वं चाज्ञानस्यैकत्वेऽपि तत्प्रमातृसम्बन्धपरिच्छिन्नत्वमौपाधिकभेदमापद्य व्यवतिष्ठत इति न सङ्करः। अस्तु वागन्तुकदोषाभावादेव परस्यागन्तुकभ्रमाभावः। न चैवमावश्यकज्ञानहेतुत्वे दोषस्यार्थाहेतुत्वं, ज्ञानाविनाभाविनोऽर्थस्य निमित्तान्तरानिरूपणात्। इदमर्थसम्भिन्नरजतादेरन्यत्रासत्त्वात्। अत्राप्यसत्त्वे च भ्रमस्य प्रत्यक्षत्वे सति निर्विषयत्वमसद्विषयत्वं वा प्रसज्येत। विषयारोप्यसम्भेदाग्रहे च विशिष्टज्ञानानुपपत्तेरित्यास्तां तावत्। एवं सहकारिदोषाद्यागन्तुकतयाविद्योपादानसातत्येऽपि न कार्यसातत्यप्रसङ्गः। न च मिथ्यात्वमनस्तिकत्वमित्यतो मिथ्यापि सा लब्धात्मा कार्यकरीति युक्तम्, आश्रयाद्युपपादनात्॥

---

## अनिर्वाच्ये बुद्ध्याद्यसङ्करः।

यत्तु तदनिर्वचनीयं किमिति न घटशब्दप्रत्ययौ भजत इत्यादि। तत्र पृच्छामः। प्रत्युत्पद्यमानो घटो वा किमिति न गोशब्दप्रत्ययौ भजत इति। घटत्वादिति चेद्, रजतत्वादिति तुल्यम्। व्यक्तिबाधेऽपि जात्यबाधो न विरुध्यते, व्यक्तिविनाशेऽपि जात्यविनाशवत्। तया च सत्यैव परतोऽपि निषेधादिव्यवहारो बाधश्चोपपादित इत्यलं स्वभावहताघातेन। तस्माद् युक्तं ख्यातिबाधोपपत्तेरनिर्वचनीयमिति॥

---

## सत्ख्यातौ बाधानुपपत्तिः।

सत्ख्यातिमते विषयसत्त्वेन ख्यात्युपपत्तावपि बाधानुपपत्तेः। तत्र न तावच्छुक्तिभूयस्त्वसाकल्यग्रह एव बाधकः, शुक्तिशकलमध्यनिहितालपीयोरजतज्ञानस्यापि तद्बाध्यत्वप्रसङ्गात्। अनवगतयद्रूपाविविक्तावभासं यत् तज्ज्ञानमेव तद्बाधकमिति चेत्। अनवगतपार्थिवाप्यादिरूपाविविक्तावभासो वृक्ष-

---

१. 'र्थं' ख. पाठः.

(का ? क)रकादिस्तज्ज्ञानबाध्यः स्यात् । यद्रूपानवभासमूलं यज्ज्ञानं तज्ज्ञानं तस्य बाधकमिति चेद् , न । आपण इव शुक्त्यादावपि सतो रजतस्य स्वसामग्रीनिबन्धने ज्ञाने तदनवभासमूलत्वकल्पनानवकल्पनात् । अत एव यज्ज्ञानहेतुभूतदोषेण यदवभासप्रतिबन्धः, तस्य तज्ज्ञानं बाधकमिति निरस्तम् । सद्रजतज्ञानस्य दोषजन्यत्वायोगात् । शुक्तिभूयस्त्वसाकल्यग्रहे शुक्तौ रजतज्ञानं न जायत इति तत्प्रतिबन्धाय दोषोऽपेक्षणीय इति चेत्, तर्हि शुक्तिराशिसङ्कलितावभासादल्पीयसो रजतादस्य दुर्वचविशेषतया यथादर्शनमस्यैष स्वभाव इति परिशिष्येत । ततः सर्वार्थनिरूपणानर्थक्यम् । नेदं रजतमिति ज्ञानं च न बाधकम् । शुक्तिसंस्थानालम्बनस्य प्रत्यक्षस्य तव प्रतियोगिनिरपेक्षत्वेन तथा रूपाविषयत्वात्, शुक्ते रजतस्य च सतोरन्योन्यभेदग्रहाविशेषाच्च, पूर्वापरभावस्य च बाध्यबाधकाभावाहेतुत्वात् । अत एव सत्यज्ञानं बाधकमित्यपि न । रूप्यज्ञानस्यापि तव सदालम्बनत्वात् ॥

---

## भ्रमत्वायोगः ।

कुतश्च रूप्यज्ञानं भ्रमः । नहि दोषो विषयानवभासो वा तत्र हेतुः सदालम्बनत्वादित्युक्तम् । अपिच नीरप्रायेऽपि क्षीरज्ञानमिव शुक्तिप्रायेऽपि रूप्यज्ञानं भ्रमो न स्यात् । उभयत्रेदं रजतमिदं क्षीरमित्याविविक्तावभासित्वाविशेषात् । अथवा न विवेकानवभासः, रजतत्वादिसंस्थानस्यैव तस्यावभासात् । सत्ख्यातिवादे यद् यथा प्रतीयते तस्य तथाभावावश्यम्भावे नेदं रजतमिति शुक्तिनिरन्तरभानत्वायोगाच्च । अपिचैवं सर्पगन्धादौ केतकीगन्धादिविभ्रमा न स्युः । सर्पभोगसङ्कलितकेतक्यवयवगन्धोपलब्धेरेव त्वया वाच्यत्वेन तत्र प्रतीतान्यरूपाविवेकाभावात् । न च सर्पगन्धोऽपि तत्र भासते तवाप्यारोप्यविषयतया तदवभासावश्यम्भावादिति वाच्यम् । अत एवास्माकं तदवभासकल्पनेऽपि तव केतकीगन्धमात्रोपलम्भसम्भवेन तदकल्पनात् । न रजतमिदं शुक्तिशकलमेव न केतकीगन्धोऽयं सर्पगन्ध एवेति निषेधस्य भ्रमत्वाभिमतगृहीतैकदेशालम्बनत्वानुभवात् । तत्र शुक्तिशकलस्य सर्पगन्धस्य चावभासः कल्प्यत इति चेद् , न । निषेधज्ञान एवेदन्तया तदवभासोपपत्तेः । अपिचैवं सत्ख्यातिमते प्रवृत्तिविसंवादस्तत्प्रतिबन्धो वा बाधो न

स्यात्, सद्रजतज्ञानाविशेषात्। तत्रापि कुतोऽपि विषयपरिमोषे सन्निहितशुक्तिशकले प्रवृत्तिविसंवादस्य नेदं रजतमिति प्रतीत्या तत्प्रतिबन्धस्य च तुल्यत्वादुभयत्र बाधप्रसिद्धिर्वा स्यात्। उपेक्षणीयभ्रमेषु प्रवृत्त्यप्रसङ्गेन बाधापत्तिश्च। कुतश्च विषये रजतादौ सदासत्त्वावसिते तान्त्रिकदासस्य विसंवादः प्रवृत्तेः प्रतिबन्धो वा। अकार्यकरत्वात् तदुपलम्भविरोध्युपलम्भाच्चेति चेत्। यद्युपलभ्यमानमेव तदकार्यकरमुपलभ्येत, प्रवृत्तिरेव सा न स्याद्, या विसंवदेत। अथ कार्यकरमन्यथाख्यातिरापद्येत। कथं च शुक्तित्वोपलम्भस्तदुपलम्भविरोधी, येन तत्प्रवृत्तिः प्रतिबध्येत। यथास्वमुभयोरस्ति हि विषय इति। अत एव रजतोपलम्भनिरोध एव बाध इति दुर्वचम्। अपिचादोषेऽपि सद्रजतमुपलभ्येत, सदुपलम्भे दोषस्याहेतुत्वात्। न चेदं रजतमिति इतरेतरानिरूप्यविशेष्यविशेषणभावज्ञानं, येनेदृशे विशिष्टज्ञाने दोषो हेतुरिति कल्प्येत। अक्षसन्निकृष्टस्य सतो रजतस्येवेदमित्युपलम्भो हि सम्भवति। शुक्तिभूयस्त्वं तु न रूप्योपलम्भविरोधी, दोषेऽपि तदभावप्रसङ्गात्। तदग्रहश्चासति दोषे सति चाक्षसम्प्रयोगदशायामविशिष्टः। न च तद्ग्रहोऽपि तत्र विरोधीति तदग्रहाय दोषापेक्षा, शुक्तिराशिसंवलितालपरजतोपलम्भात्। न च दृष्टोपपत्तावदृष्टमूलत्वकल्पना युक्ता। विषयाभावो हि नेदं रजतमिति दासेराणामपि दृष्टः। स च शुक्तित्वानतिरिक्तोऽपि प्रसज्यसत्त्वविरोधीत्यस्माकं विशेषः।

अपिचैवमिदं रजतमिति सत्ख्यातिमते किंविषया रजतार्थिप्रवृत्तिः। यदि रजतविषया न विसंवदेत। ज्ञानोद्देशैकविषयत्वात् सम्मतप्रवृत्तिवत्। अथ शुक्तिविषया, तत्र को हेतुः। अगृहीतान्तरवस्तुद्वयगुणप्रधानभावावगाहिविशिष्टज्ञानमिति चेत्। नन्विदं रजतमित्येव संस्थानलक्षणमन्तरं गृहीतं गुणादिभावावभासश्च। यद्यन्योन्यापेक्षयान्यथाख्यातिप्रसङ्गः। न चानपेक्षयैव अन्याधीननिरूपणो हि स इति॥

---

१. 'म्भविरो', २. 'वभासप्र' ख. पाठः.

## शुक्त्यादौ रजतादिसत्त्वनिरासः।

अपिच न शुक्त्यादावज्ञातरजतादिसत्त्वे मानं मन्यामहे, प्रातिभेनापि तत्र तदध्यक्षान्यथासिद्धेः। न च सत्त्वात् तदनुमानं, नेदं रजतमित्यबाधितापवादबाधात्। सत्ख्यातावेव च ख्यातिबाधाद्यन्यथानुपपत्तिरुक्ता। यत्तु — त्रिवृत्करणश्रुत्यादिभिरितरेतरसमावेशेन भूतानामेकस्मिन् शुक्तिरूपपरिणामिनि परस्य तत्सम्भेदेनैव रजतपरिणामोऽपि स्यादिति। तत्र पृच्छामः। स किं शुक्त्यवयवान्तरितावयवः स्यात् तदनन्तरितावयवो वेति। आद्ये विशकलितावयवेष्वरजतेषु रजतबुद्धिरन्यथाख्यातिः स्यात्। अवयविजातेरवयववृत्तौ च मृदि घटत्वशरावत्वादिसाङ्कर्यप्रसङ्गः। वह्निकणे रूप्यभित्ते वा अबाधिततत्तद्बुद्ध्यनुवृत्तेः रजतत्वादिरापरमाणोरेका जातिः पृथिवीत्वादिवदिति चेद्, एवमपि शुक्त्यवयवान्तरितवृत्तितयाणुषु अनन्तेषु रजतेषु स्थूलत्वैकत्वधीरन्यथाख्यातिः स्यात्। द्वितीये च शुक्त्यवयवानन्तरितावयवो रजतपरिणामो यदि तामभिव्याप्य वर्तेत, न शुक्तिरुपलभ्येतैव। अनभिव्याप्यवृत्तौ चार्धनिखातशङ्कोरिव शुक्तेरपि परिमाणं न गृह्येत। सर्वथैव च सर्वजनीनो नेदं रजतमिति बाधो न स्यात्। शुक्तिभूयस्त्वसाकल्यग्रहेण केवलं तदनुपलम्भे चाद्राक्षमिह रजतं नेदानीं पश्यामीति स्याद्, न नेदं रजतमिति।

अपिच 'सोमाभावे पूतीकानभिषुणुयादि'ति प्रतिनिधिनियमशास्त्रमेव सदृशे सदृशान्तरासमावेशं दर्शयति। अन्यथा पूतीकेष्वेव सोमसत्त्वे सोमाभाव इति न सम्बध्येत। रजतावयवो रजतमिव सोमावयवोऽपि हि सोम एव स्यात्। सदृशान्तरावयवसुसदृशावयवा एव हि सदृशान्तरे तदवयवा उपगम्यन्ते परेण। अन्यथा अरजते रजतबुद्धिरन्यथाख्यातिः स्यादिति। न च सोमाभाव इति विशेषे लाक्षणिकं युक्तं, सामान्यविषयत्वसम्भवात्। कथं तर्हि व्रीह्यभावे नीवारा एव प्रतिनिधीयेरन्, न श्यामाकादयः। कथं वा नीवारेषु व्रीहित्वावच्छेद्या व्रीहय एव प्रतिनिधीयेरन्। प्रक्रान्ते च प्रयोगे तैरेवान्तरा व्रीहिलाभे त्यज्येरन्। अतदवयवसाङ्कर्यस्येतरत्रेतरत्र चाविशेषात। कथं तर्हि सादृश्यात् प्रतिनिधीयन्ते। शास्त्रादेव, न तु तदवयवसत्त्वन्यायात्।

कथं तर्हि शिष्टाभावे सादृश्यात् प्रतिनिधिः । 'सामान्यं तच्चिकीर्षा हि' (जै० ६. ३. २७) इति षष्ठाधिकरणे हि श्रुतद्रव्यापचारे प्रतिनिधायावश्यकर्तव्ये यागे यत् किञ्चिदेव द्रव्यमपर्युदस्तं प्रतिनिधेयमविशेषादिति प्राप्ते, यत्र सामान्यं तत् प्रतिनिधेयं कुतः, श्रुतचिकीर्षा हि वर्तते । सदृशप्रतिनिधाने च तदेव कृतं भवति । कथं 'व्रीहिभिर्यजेते'ति । उच्यते । न च तदभिधेया व्रीह्याकृतिरेव यागक्रियायां साक्षादङ्गं भवति । न च तदवच्छेद्या व्यक्तिरपि, पेषणादिविधानात् । किन्त्ववयवाः । न चाव्याप्रियमाणेष्ववयवेषु सतोऽपि खदिरादेरवयविनो व्यापारः सम्भवति । अतो व्रीह्याकृतिव्यक्त्यवयवा व्रीहिशब्दोपात्ता इति तदाकृतिव्यक्त्यभावेऽपि नीवारेषु प्रतिनिधीयमानेषु त एव कतिपयेऽपि व्रीह्यवयवाः सङ्गृहीता भवन्तीत्यतः सदृशा एव प्रतिनिधेया इति स्थितमिति ।

अत्रोच्यते — न सादृश्यात् प्रतिनिधिः । किन्तु शास्त्रादेव । न खलु व्रीहिशास्त्रमनुष्ठातुं प्रतिनिधिरिष्यते । किं तर्हि प्रधानशास्त्रमेव । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्यादिचोदनायां हि यागक्रियावश्यकार्या वाक्यार्थः । प्रधानं काम्यचोदनायामप्यारब्धमवश्यसमापनीयमिति शिष्टाचारानुमितश्रुत्यनुग्रहेणावश्यकार्यत्वावगमात् । तत्र चोदनावश्यकार्यतांशेनार्थतो यत् किञ्चिद् द्रव्यमविशेषेण क्रियासाधनमुपादापयन्ती व्रीहिभिरिति साधनद्रव्यविशेषसमर्पकेणैकवाक्यताङ्गता तत एवोपपादितार्थतया द्रव्यान्तराक्षेपा निवर्तते । प्राक् तु तदेकवाक्यतायाः साधनद्रव्यतया व्रीहिरपि सम्भवत्प्राप्तिरिति पुनः श्रुतिरूपं व्रीहिशास्त्रं द्रव्यान्तराक्षेपनिरोधितयार्थतो नियमविधिरुच्यते । श्रुताभावे पुनरार्थिकतन्नियमत्यागेन स एव यत्किञ्चिद्द्रव्यविशेषाक्षेपोऽवतिष्ठत इति यत्किञ्चिदेव[1] द्रव्यमपर्युदस्तं प्रतिनिधेयमिष्यते । अयं पक्षः 'आगमो वा चोदनार्थाविशेषात्' (जै० ६. ३. १५) इति सूत्रविवरणे टुप्टीकायां दर्शितः । या प्रधानचोदना यत्किञ्चिद् द्रव्यमर्थादाकाङ्क्षति, सा व्रीहिभिर्विद्यमानैरेकवाक्यतां प्रतिपद्यमानार्थप्राप्तिं द्रव्यान्तराणां बाधते । श्रुतद्रव्याभावे तु या द्रव्यान्तराणामर्थप्राप्तिः सा केन वार्यते । तस्माद् द्रव्यान्तरागमः कर्तव्य इति । आख्यातं वा यागक्रियांशेनाकाङ्क्षितं साधनद्रव्यमविशेषेणोपादापयद् व्रीहिभिरिति तृतीयया साधनद्रव्यसमर्पिकयैक-

१. 'द् द्र' क. पाठः.

वाक्यतां गतं प्रशान्ताकाङ्क्षं चोदनयान्वेति । तत्र केवलविभक्तेरप्रयोज्यतया कस्मिंश्चिदवश्यप्रयोज्ये प्रातिपदिके व्रीहित्वमतन्त्रमित्यतो नियमेन सर्वमेव साधनद्रव्यं शाब्दमेव ।

यद्येवं कथं तर्हि 'व्रीहिभिर्यजेत', 'यवैर्यजेते'ति शास्त्रद्वयमर्थवत् स्यात् । विभक्त्यैवाकाङ्क्षितसमर्पणेन प्रातिपदिकम[illegible]नीयायातिकमनर्थकीकृतम् । कथं च प्रतिनिधिः, सर्वमेव हि साधनद्रव्यं शाब्दमिति वैकल्पिकमेव स्यात् । उच्यते — सत्यम्, न प्रतीतितोऽर्थवदनाकाङ्क्षितत्वात् । किन्तु प्रवर्तिका हि चोदना क्रियाप्रवृत्तौ विशेषमपेक्षमाणान्यार्थोपस्थितमपि विशेषमुपादाय चरितार्था भवतीति प्रवृत्तितो नियमनेन विकल्पनेन च शास्त्रद्वयमर्थवत् स्यात् । अत एव च श्रुतप्रवृत्तिसौकर्यापेक्षयैव श्रुताभावे द्रव्यान्तरमुपादीयमानं प्रतिनिधिरुच्यते । यजिप्रकृतिर्वा देवतोद्देशेन द्रव्यत्यागात्मकैर्यागांशेन[2] द्रव्यमुपाददाना निर्विशेषसामान्यायोगेन विशेषमुपादापयन्ती व्रीहिपदेन[3] विशेषसमर्पकेणैकवाक्यतां गता विशेषान्तराक्षेपान्निवर्तते । तत्र शब्दोपात्तद्रव्यत्वस्य नीवारादौ श्रुतव्रीहिभिरेकार्थसमवायित्वासम्भवादार्थिको विशेषान्तरनियम इति तदभावे तन्नियमत्यागेन तदेव सामान्यद्वारं विशेषान्तरमुपादीयमानं प्रतिनिधिरुच्यते । सर्व एते पक्षा वाक्यपदीयादौ परिश्रमशालिनां सुगमाः । तदेवं सर्वथापि सादृश्यमनपेक्ष्य शास्त्रादेव प्रतिनिधिरिति ।

ननु 'प्रतिनिधिश्च तद्वत्' (जै० ३. ६. ३७) इति तार्तीयाधिकरणे श्रुतद्रव्यापचारे प्रतिनिधिर्नीवारादिः प्रोक्षणावहननादिधर्मेष्वसमानविधानः अतुल्यत्वात् । नित्यव्रीहिद्वारका नित्यास्ते धर्माः । श्रुतद्रव्याभावे भवन्नीवारादिरनित्यः । एवञ्च यथा नित्यसोमाभिषवादिधर्मेषु नैमित्तिकफलचमसोऽसमानविधानः तद्वदिति प्राप्ते सिद्धान्तितम् ।

न । 'तद्वत् प्रयोजनैकत्वात्' (जै० ३. ६. ३८) नासमानविधानः प्रतिनिधिः । किं तर्हि तद्वत् स्याद् यद्वद् 'व्रीहीन् प्रोक्षती'ति, स एवास्य धर्मविधिरित्यतः समानविधान इत्यर्थः । कुतः । प्रयोजनैकत्वात् प्रयुज्यते येन व्रीहिव्यक्तौ धर्मसम्बन्धः तत्प्रयोजनं, व्रीहिव्यक्तौ धर्मसम्बन्धनिमित्तं

१. 'तिवि', २. 'कतया यागां', ३. 'न व्रीहिस' ख. पाठः.

व्रीहित्वं नीवारगतास्वपि व्रीहिव्यक्तिषु समानम् । अतो व्रीहिलक्ष्या उभय्योऽपि व्रीहिव्यक्तयः समानविधानाः । न तत्स्थानतया प्रकृतिविकारभावेन नीवारेषु धर्मप्राप्तिः । ननु नीवाराः प्रतिनिधीयन्ते, कथं समानविधाना इति । नैवम् । 'अशास्त्रलक्षणत्वाच्च' (जै० ३. ६. ३९) न खल्वेवं शास्त्रमस्ति व्रीहिस्थाने नीवारा भवन्तीति । अर्थाद्धि प्रतिनिधिः क्रियते । व्रीहिलक्ष्यव्यक्तिसत्त्वसामर्थ्यादित्यर्थः । स एष सिद्धान्तः प्रतिनिधेः शास्त्रलक्षणत्वेनावकल्पेत । श्रुताभावे शास्त्रेण ह्युपादीयमानं श्रुतद्रव्यस्थानापत्त्या यागसाधनत्वेनोपादीयेत । ततश्च 'सोमाभावे पूतीकानभिषुणुयादि'त्यभावे विधिरिति पक्षे मानपरिक्रयादिसोमधर्मेषु पूतीकानामिव नीवारादीनां प्रोक्षणादिव्रीह्यादिधर्मेष्वसमानविधानता प्राप्नोति । तस्मात् प्रतिनिधेः श्रुतसामानविध्यमिच्छता अर्थादेव प्रतिनिधिरेषितव्य इति ।

अत्रोच्यते — उक्तं तावत् सदृशेषु नेतरत्रेतरेतरावयवाः सम्भवन्ति, इतरेतरावयवान्तरितानन्तरितादिविकल्पदोषग्रस्तत्वात् । 'सोमाभावे पूतीकानि'ति पूतीकेषु सोमाभावदर्शनाद् लिङ्गाच्चेति[1] । ततो न व्रीहय इत्येव नीवाराः प्रतिनिधेयाः । न चान्तरेण शास्त्रमिच्छया नीवारान् प्रतिनिधाय शास्त्रार्थकारी भवति । तस्मादवश्यं प्रतिनिधौ शास्त्रमन्वेषणीयम् । तच्च क्रियाचोदनैवेत्युक्तम् । न च श्रुताभावे शास्त्रं प्रतिनिधिमुपादापयति येनाानित्यः स इत्यसमानविधानता[2] स्यात् । किन्तु क्रियाचोदनयार्थसामर्थ्यप्रस्ताव[3] उत्सृष्टो बाधकाभावे तथैवावतिष्ठत इति ह्युपपादितम् । तदेवं शास्त्रादविशेषेण प्रतिनिधिप्राप्तौ सदृशप्रतिनिधयः[4] शिष्टाचारात्, सदृशोपस्थितिप्राशुभावाद्, लोके विरहिविनोदाय सदृशप्रतिनिधिदर्शनाच्चेत्युपपन्नम् । तथाच 'सामान्यं तच्चिकीर्षा हि' (जै० १. ३. २७) इति सूत्रं यत्र सामान्यं तत् प्रतिनिधेयं, मुख्याभावे तत्समानचिकीर्षा हि शिष्टाचारे दृष्टा लोके वा विरहिविनोदादाविति व्याख्येयम् । अथवा 'सोमाभावे पूतीकानभिषुणुयादि'ति शास्त्रमेव सोमे सदृशविशेषणं नियच्छदर्थतो विहितद्रव्याभावे सर्वत्र सदृशप्रतिनिधानं विधत्त इति गम्यते । कथं पूतीकशास्त्रे सदृशविशेषनियमोऽवगम्यते । प्राप्तेषु[5]

१. 'नाच्च लि' क. पाठः. २. 'नः स्या', ३. 'नायामर्थ', ४. 'निधिनियमः शि' ख. पाठः. ५. 'षु स' क. पाठः.

हि सदृशेषु तन्नियमो भवति। तन्नियमाच्च सदृशविधिमुन्नयतः प्राप्तमितरेतराश्रयत्वम्। न। अभावे विधौ गौरवं नियमे लाघवमिति तर्किते नियमे तदुपपादकतया तत एव सामर्थ्यात् सामान्यतः सदृशप्रतिनिधौ सम्भाविते तर्कितविधिलाघवसामर्थ्यादेव युगपदुभयनिर्धारणोपपत्तेः। अत एव न श्रुतेन प्रतिनिधेर्विकल्पः प्रत्यक्षानुमानयोरतुल्यबलत्वात्। अथाभावे विधौ पूतीकानामभिषवादावसमानविधानत्वमाशङ्क्य समाहितं सूत्रकृता 'नियमार्था पुनःश्रुतिः' (जै० ३. ६. ४०) इति। तत्र शास्त्रलक्षणश्चेत् प्रतिनिधिः श्रुताभावे विहितः स्यात् 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिसङ्ख्याय यजेरन्नि'त्यादिवत्। ततश्च फलचमसवन्नैमित्तिकत्वादसामानविध्यं स्यात्। अत एव समानविधानत्वे शास्त्रलक्षणत्वं बाधकमभिप्रेत्य 'अशास्त्रलक्षणत्वाच्च' (जै० ३. ६. १९) इति सूत्रितम्। भाष्यकारश्च 'अर्थाद्धि प्रतिनिधिः क्रियते। न चार्थेनैतदवगन्तुं शक्यते व्रीहित्वस्य स्थाने नीवारत्वं भवती'ति। एवं वदन् सदृशन्यायसिद्धावेव प्रतिनिधेः सामानविध्यं स्यादित्यभिप्रैति। तस्माच्छास्त्रलक्षणत्वे प्रतिनिधेर्धर्मेषु समानविधानत्वानुपपत्तिरिति चेत्। उच्यते। इष्यते तावद् व्रीहियवयोः शास्त्रलक्षणयोरेव धर्मेषु समानविधानत्वम्। एवं प्रतिनिधावपि भविष्यति। न च श्रुताभावे निमित्ते प्रतिनिधिः। किन्तु श्रुतद्रव्याभावेन प्रधानोत्सर्गे प्राप्ते तदावश्यकत्वचोदनया तस्यामेव द्रव्यसामान्यप्राप्तौ स्थितायां पूतीकविधिं पर्यालोचयतोऽर्थतः सदृशप्रतिनिधिनियमविधिमात्रप्रतिभानात्। यद्यपि पूतीकविधौ सादृश्यं[1] नोपात्तं, तथापि सोमसादृश्यं पूतीके प्रतिसन्दधतः प्रतिपत्तिप्राशुभावादौचित्याद् वा सदृशप्रतिनिधिनियम उन्नीयताम्। नारिका हि विरहिविनोदाय प्रतिनिधीयते। तस्य च यागसाधनतानिवेशेन फलचमसवैलक्षण्याद् यववत् प्रोक्षणादिधर्मेषु समानविधानत्वं 'व्रीहीणां मेधे'त्याद्यनूहश्च सिद्धो भवति। तथा च 'अशास्त्रलक्षणत्वात्—' (जै० ३. ६. ३९) इति सूत्रमभावे तद्विधिलक्षणत्वाभावादिति व्याख्येयम्। 'सामान्यं तच्चिकीर्षा हि' (जै० ६. ३. २७) इति च शास्त्रादपि सदृशमेव प्रतिनिधेयम्। तदभावे तत्समानचिकीर्षा हि लोके दृष्टा विरहिविनोदनादावित्यभिप्रायम्। 'अर्थाद्धि प्रतिनिधीयते' इति भाष्यं च सदृश-

---

१. 'श्ये', २. 'वि' ख. पाठः.

प्रतिनिधिशास्त्रस्यैवोदितन्यायानुसन्धानसापेक्षतां दर्शयति, न तु नीवारेषु व्रीहिलक्ष्यव्रीहिव्यक्तिसत्त्वसामर्थ्यात् प्रतिनिधानमिति न्याय्यम् । अन्यथा यदि व्रीहिशास्त्रमेवानुष्ठातुं[1] नीवारेषु व्रीहिव्यक्तय एव साधनतयोपादीयेरन्, तर्हि नीवारेषु चतुर्मुष्टिपरिमितेषु निरुप्तेषु व्रीहिव्यक्तीनामल्पत्वेन प्रधाननिर्वृत्त्यक्षमत्वशङ्कया प्रतिनिध्यनुपादानप्रसङ्गः । तथाच सूत्रम् — 'अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात्' (जै० ६. ३. ३९) इति । द्रव्यमुपादीयमानं स्वार्थं निर्वर्तयितुमक्षममित्यर्थद्रव्यविरोधे अर्थ एवादर्तव्यः । अतो द्रव्याभावे तदुत्पत्तिः प्रतिनिध्युत्पत्तिः । कुतः । द्रव्याणामर्थशेषत्वादित्यर्थः । न च नीवारैरपि तदर्थनिर्वृत्तिः । अशब्दं हि कृतं स्यात् । अपिचैवं मुष्टिमात्रव्रीहिलाभे शेषं नीवारैरभिपूर्येत । न तु तत्त्यागः स्यात् । 'खादिरं वीर्यकामस्ये'त्यादिगुणकामाश्च कदरप्रतिनिधावपि प्रसज्येरन् । तत्रापि खदिरलक्ष्यखादिरव्यक्तीनामेव यागसाधनत्वोपगमात्[2] । अत एव च मौद्गश्यामाकादिचरौ मुद्गाद्यपचारे तत्सदृशमाषा वरकाः कोद्रवाश्च प्रतिनिधेया इति प्राप्ते 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इति प्रतिषिद्धाः प्रतिनिधीयमाना यज्ञाङ्गतामापादिताः स्युः । तस्मान्न प्रतिनिधेया इत्युक्तं 'प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः' (जै० ६. ३. २०) इति । 'न देवताग्निशब्दक्रियमन्यार्थसंयोगात्' (जै० ६. ३. १८) इति पूर्वसूत्रान्नेत्यनुवर्तते । प्रतिषिद्धं न प्रतिनिधेयम्, अविशेषेण हि निषेधश्रुतिरित्यर्थः । तत्र यदि मुद्गावयवाः श्यामाकावयवाश्च मुद्गादिरूपावच्छेद्या उपादीयेरन्, तदा माषाद्यवयवानां मुद्गादिष्विवावर्जनीयायतिकानामप्यङ्ग(त्वा?त्वा)प्राप्तेः प्रतिषिद्धं न प्रतिनिधेयमित्यनारभ्यमेव स्यात् । शास्त्रादेव तु सदृशप्रतिनिधिप्राप्तौ प्रतिषिद्धं न प्रतिनिधेयमित्यारम्भः स्यादर्थवान् । तस्मात् प्रतिनिधिमात्रं सदृशप्रतिनिधिनियमो वा शास्त्रादेव । अत एवैतन्निरस्तं[3] शास्त्रादेव चेत् प्रतिनिधिः व्रीह्यपचारे यवाः कस्मान्न प्रतिनिधीयन्त इति सदृशे बुद्धिप्राशुभावाल्लोकदर्शनात् सदृशनियमाद् वेति दर्शितम् ।

किं पुनः सादृश्यं, क्वचिदवयवसन्निवेशविशेषः । क्वचिद् गुणभेदः । क्वचिदन्यदित्यनियमः । विहितक्रियान्वयादभ्यर्हिततया तु सन्निवेशसदृशाः

---

१. हीति शा' ख. पाठः. २. 'मात् । तस्मात् प्रतिनिधिमात्रं' क. पाठः. ३. 'वेतरन्नि' ख. पाठः.

प्रतिनिधीयन्ते नीवारादयः । एवमपि प्रकृतापूर्वसाधननिवेशेन यथाविहितधर्माणामतिदेशानपेक्षया सामानविध्योपपत्तेः । फलचमसे तु नैमित्तिके स्यादसामानविध्यमभिषवादेः । क्रतौ नित्योपकारकस्य नित्यद्वारसम्बन्धानपवादेनानित्यद्वारसम्बन्धविधानासम्भवात् । एवं 'व्रीहीणां मेधे'ति मन्त्रानूहश्च स्यात् । तत्स्थानतया नीवाराणां सादृश्यात् ताच्छब्द्योपपत्तेः । एवञ्च यत् प्रत्यक्षं शुक्तौ रूप्यसारूप्यं तच्चाकचक्यं गुणभेद एव, न तु रूप्यावयवः ।

अपिच पृथग्भूतभूतसमावेशे नैकैकस्यावस्थाभेदपरिणामः, किन्तु समुदितस्य । 'समेत्यान्योन्यसंयोगं महदादयोऽण्डमुत्पादयन्ती'ति स्मरणात्, त्रिवृदेकावस्थाभेदस्य 'यदग्ने रोहितं रूपमि'त्याद्याम्नानाच्च । तत्र पार्थिवांशे शुक्तिपरिणामिनि तेजोंऽशो रजतपरिणामीति विप्रतिषिद्धम् । अपिच शुक्तौ रजतावयवस्य रजतत्वेऽपि गवयवल्मीकादौ गोघटादिसादृश्यस्याताज्जात्येन तद्भ्रमस्य सत्ख्यातित्वानिर्वाहादनिर्वचनीयख्यातिरवश्यमेषितव्या । एवञ्च पुरुषमृगवद् विजातीयद्वयसम्पिण्डे वस्तुस्वभावशब्दव्यवस्थाहेतुगवेषणादिक्लेशोऽपि न भवति । भूतेषु पुनरितरेतरसमावेशस्यागामिकत्वेन वैशेष्यं व्यवस्थाहेतुरुपगम्यते गत्यभावात् । एतेन मरुमरीचिकादावुदकभ्रमो व्याख्यातः । भौतिकद्वयसमावेशस्य वा समाविष्टभूतावस्थाभेदे विजातीयपरिणामद्वयस्य वा मानशून्यत्वात् ॥

---

## स्वप्नादिषु परोक्तोपपत्तिदूषणम् ।

स्वप्नश्च न पारमेश्वरी सृष्टिः, न वा यथार्थः । किन्तु दुर्निरूपोऽध्यास इति मायामात्रसूत्रोदाहारेण व्युदपादि । स्वप्नदेहे च शयानदेहाभेदव्यवहारोऽहमुपग्रहेण तदभेदारोपादुपपद्यते । अत एवाहमुपग्रहाभेदारोपादवबुद्धदेहेऽपि बाधमनपेक्ष्य स्वाप्नसरूपदेहाभेदव्यवहारः अमुनैव शरीरेण स्वर्गमभ्यगमं किलेति, न तु भेदाग्रहात् । अभेदव्यवहारस्य विशिष्टज्ञानसाध्यत्वात् ।

---

१. 'स्व' ख. पाठः.

पीतः शङ्ख इत्यादौ च न भेदाग्रहगर्भं विशिष्टज्ञानं, पीतिमशङ्खत्वादेरेव स्वस्वासाधारणरूपस्य त्वदभिमतभेदस्य ग्रहणात्। तदसाधारण्यं न गृह्यत इति चेत्। न। तदवच्छेदकरूपातिरिक्ततदसाधारण्यानिरूपणात्। पीतिमाद्येव गृह्यते न तदवच्छेद्यं द्रव्यमिति चेत्। तथापि विशेष्यशङ्खाद्यवृत्तिपीतिमादिप्रकारकतयान्यथाख्यात्यापत्तिः। न चान्योन्यानपेक्षयेह विशेष्यविशेषणताग्रहः। पीतं तपनीयं पीतः शङ्ख इत्यादिप्रत्ययाविशेषे विषयवैलक्षण्यायोगात्। एवमुपस्थितभेदाग्रहादेव विशिष्टव्यवहारोपपत्तौ शुक्त्यादौ रजतादिसत्त्वकल्पनानर्थक्याच्च। एतेन रक्तस्फटिकविभ्रमयाथार्थ्याय परस्यादृष्टजपाकुसुमप्रभाव्याप्त्युपगमो[1]ऽपि व्याख्यातः। हन्तैवमनिर्वचनीयख्यातावपि कथं पीतशङ्खादिविभ्रमाः, पीतिमद्रव्यं हि न प्रतीयते। भेदाग्रहश्चेद् वरमुपस्थितपीतिमशङ्खयोरेवास्तु अभेदारोपश्च, कल्पनालाघवात्। पीतिमोपस्थितौ दोषाच्छादितशुक्लिमनि शङ्खे पीतं तपनीयं पीतं बिल्वमित्यादिवत् पीतः शङ्ख इति सामानाधिकरण्यप्रत्यय आरोपः सम्पद्यत इति चेत्। किमेवमुक्तं भवति। उपस्थिताभेदाध्यास इति। ततश्चान्यथाख्यातिः। अनिर्वाच्यरजतादिकल्पनानर्थक्यं च।

उच्यते — ख्यातिबाधाभ्यामन्यत्रानिर्वचनीयावश्यम्भावे[2] पीतशङ्खविभ्रमादावन्यथाख्यातौ मतव्याकुली मा भूदित्युपस्थिताभेदारोपमनिर्वचनीयमिष्यते।

अथवा

मा ग्राहि पीतिमा पित्तद्रव्ये चक्षुरुपाश्रये।
स्फटिके प्रतिबिम्बो वा लाक्षादेरिति लक्ष्यताम्॥
अध्यासहेतुसामग्र्ये तत्र दोषतयैनयोः।
पीतिमादिग्रहं यावदध्यासो न विलम्बते॥
स चानिर्वाच्यविषयो निश्शङ्कमुपपद्यते।
गृह्यमाणस्मर्यमाणारोपभेदश्च मा स्म भूत्॥

इति।

---

१. 'मो व्या', २. 'वेऽपि पी' ख. पाठः.

चक्रता च सन्निवेशभेदो युगपदेकस्य विष्वग्देशसम्बन्धहेतुः । स चानिर्वाच्य एवेति न सत्ख्यातिः । अथापि निरुक्तसम्बन्ध एव चक्रता स्यात् । तथापि तत्र क्रमिके यौगपद्यग्रहादन्यथाख्यातिः स्यात् । चक्रप्रमितौ हि न तदन्तरालाग्रह एव, सम्बन्धयौगपद्यानुभवस्य सर्वजनीनत्वात् । प्रतिबिम्बभ्रमेषु च नोपाधिप्रतिहतनयनपरावृत्त्या तदाभिमुख्याद्यगृहीतभेदमुखप्रतिपत्तिः, तटाकतरुप्रतिबिम्बभ्रमे तदसम्भवादित्युक्तम् । कथं पुनः सिद्धान्तेऽपि प्रतिबिम्बभ्रमः, यथा दृष्टविशिष्टाध्यासे बिम्बप्रतिबिम्बाभेदविरोधात् । मुखे तु यथादृष्टरूपभेदाध्यासेऽक्षिसम्बन्धो हेतुरिति । सत्यं, स कपोलादिस्वभागेन स्वभावादस्ति ।

अथवोपाधिना चक्षुः प्रतिस्रोतः प्रवर्तितम् ।
मुखे संयुज्य पाश्चात्ये रूपभेदं विकल्पयेत् ॥

इति न शङ्कातङ्कः ।

न च दिशामनेकत्वेऽपि प्राच्यादयोऽव्यवस्थिताः सर्वगताश्चेति मानमस्ति, अनन्ता हि दिश इति श्रवणस्य बोध्यबुद्ध्यपेक्षत्वात् । अन्यथा चतस्रोऽष्टौ दशेति दिक्संख्यानियमायोगात् । 'यत्रासां दिशामन्त' इत्यादिविरोधाच्च । अतो न दिगन्तरनिरन्तरभानमात्रं दिङ्मोहः, किन्तु देशभेदेन प्रथमादित्यसम्बन्धाद्युपाधिव्यवस्थितभेदासु दिशासु व्यत्यस्याध्यासोऽनिर्वाच्य एव। द्विचन्द्रविभ्रमे च देशभेदवैशिष्ट्येन भेदाध्यास एव । एवं हि सामग्रीभेदकल्पना सर्वानुभवविरुद्धग्रहणद्वयकल्पना चन्द्रदेशान्तरनिरन्तरभानकल्पना ग्राह्याकारगतद्वित्वस्य नैत्रवृत्तिवर्तिद्वित्वस्य वा चन्द्रस्वरूपभेदाग्रहकल्पना चेत्यमूला कुसृष्टिरनाश्रयणीया । अपिच,

देशे वा नैत्रवृत्तौ वा तदापेक्षामतिर्न नः ।
अपेक्षाबुद्ध्यभिव्यङ्ग्यं द्वित्वं चन्द्रेऽधिगम्यताम् ।
भेदेन चन्द्रमारोप्य प्रथमं तदपेक्षया ।
तत्राभिव्यज्यमानं तु द्वित्वं प्रत्येत्यनन्तरम् ॥

तदेवं सर्वविभ्रमैकरूप्ये[1] सम्भवति शुक्तिरूप्यमरीच्युदकादौ सत्ख्यातिं, पीतशङ्खरक्तस्फटिकप्रतिबिम्बालातचक्रद्विचन्द्रादावख्यातिमन्यथाख्यातिं वोपयते,

---

१. 'क्ष्ये' ख. पाठः.

वैदिकविडम्बिनस्तन्त्रजडस्य शीलानुरूपमर्थतत्त्वनिरूपणमित्युपहास्यम् । यत्तु अत एव सर्वानुपपत्तिपरिहाराय यद् यथानुभूयते तत् तथैव भगवत्सङ्कल्पनामयमुपपद्यत इति, तदिदमतिभक्त्यभिनयमात्रम् । तद्धि यदि किञ्चित् तदुपाधावेव प्रतीतसत्त्वसमयावच्छिन्ननिषेधप्रतियोगितावच्छेदकरूपवदुपगम्यते तदेव तस्य मिथ्यात्वमायातम् । यदि न, बाध्यबाधकव्यवस्थानुपपत्तिः । न च तदेकानुभाव्यतया तत्कालावसानेऽपि सुखादेर्बाध्यता । न च सतः शुक्तिरूप्यादेरेकानुभाव्यतानियमः, तादृशानेकानुभाव्यतासम्भवात् । स्वप्नस्यापि स्वप्नसृष्टानेकपुरुषानुभाव्यत्वसम्भवात् । तद्याथार्थ्योपगमस्य द्रष्टरि दृश्ये चाविशेषाद्, मिथ्यात्वे चारोप्यस्य वस्तुतत्त्वाज्ञानोपादानसत्त्वावभासतया तन्निषेधविकल्पितवस्तुतत्त्वावभासेन बाध इत्युपपन्नम् । तद् यदि शुक्तिरूप्यादि भगवत्सङ्कल्पनामयं यदि वौचित्यादविद्यामयं, सर्वथापि ख्यातिबाधाभ्यामनिर्वचनीयं मिथ्या युक्तम् । एवमनाद्यविद्यापि तथैवानिर्वचनीये[1]ति न्याय्यमुपगन्तुमिति ॥

---

## अविद्याया अप्रामाणिकता ।

यत्पुनरीदृशाविद्यायां न प्रमाणमिति तत् तथैव । यद्यनधिगताधिगमः प्रमाणमबाधितानुभवो वा नह्यज्ञानगोचरमज्ञानान्तरं प्रमाणेन साध्यते, अनवस्थापातात् । नापि स्वयमेव स्वस्यानधिगतिः, अज्ञानस्य स्वपरनिर्वाहित्वोपगमादिति शङ्क्यम् । तदसिद्धिप्रसङ्गात् । प्रमाणवृत्तेरज्ञानावसादेन विषयावभासफलत्वात् । यथाहुः—

"अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते ।
मानादज्ञातता चेत् स्यान्न सा तत्फलमिष्यते ॥"

इति । अथानधिगतिर्ज्ञानाभाव एव मानवृत्त्युपजीव्यो न भावरूपमज्ञानं, स चाज्ञानेऽपीति स्यात् । तदपि प्रमेयमिति चेत् । तर्हि न प्राज्ञानवृत्तेरवभासेत । भासते च सर्वमानवृत्त्युपरमेऽपि सुप्तावज्ञानं, न किञ्चिदवेदिषमिति प्रतिबुद्धप्रत्यवमर्शात् । यथा चाहुः—

---

१. 'पि' ख. पाठः.

"अविज्ञातः प्रमाणानां विषयो वादिनां मतः ।
न तस्य मानतः सिद्धिस्तत्सिद्धेः प्राक् प्रमागमात् ॥"

इति । न चाज्ञानमबाध्यमौपनिषदानामनिर्मोक्षप्रसङ्गात् । अतो न मानगम्यमज्ञानम् । तदप्याहुः—

"वस्तुनोऽन्यत्र मानानां व्याप्रुतिर्नेहि युज्यते ।
अविद्या च न वस्त्विष्टं मानाघातासहिष्णु ते ॥"

इति । अपिच प्रमाणावसेयत्वमज्ञानस्य सविषयस्यैवेति प्रमाणवृत्तिविषये स एवाज्ञानानुभवविरोधः । अर्थाव्यभिचारितानुभवमात्रं तु प्रमाणमर्थक्रियासमर्थविषयानुभवमात्रं वाज्ञानेऽपि स्यात् । न जानामीत्येवमादेरनुभवस्य तथाभावात् ॥

---

## न जानामीत्यभावाविषयता ।

यत्तु सम्प्रतिपन्नज्ञानाभावगोचर एवायमनुभवो लाघवादिति । तन्न । प्रतिविषयं प्रतियोगिभूतज्ञानानन्त्येन तज्ज्ञानस्य दुर्घटत्वात् । घटज्ञानमिति साजात्यात् सुघटं तदिति चेत्, तथापि न किञ्चिज्जानामीति भिन्नविषयसंस्थानज्ञानाभावानुभवानुपपत्तेः । न च प्रतियोगिविशेषज्ञानमनपेक्ष्य विशेषाभावज्ञानमुपपद्यत इत्युदितम् । अपिच प्रतियोगिनि घटादिज्ञाने ज्ञायमाने घटादिरपि ज्ञात एवेति तदज्ञानानुभवानुपपत्तिः । यत्तु अविशदस्वरूपावभासं ज्ञानं विशदस्वरूपज्ञानाभावानुभवाविरोधीति, तत्र स पृष्टो व्याचष्टाम् । किमविशदस्वरूपविषयत्वमिति । न तावदभावनिरूपकतावभासित्वं, प्रागेवाभावनिरूपणादाश्रयस्य प्रतियोगिभूतज्ञानस्य च सविषयस्यावश्यज्ञेयत्वात् । नाप्यविद्यमानज्ञानावच्छेदकतया परोक्षाविभासित्वम् । प्रतियोगिज्ञानस्यास्यैव विद्यमानस्यापरोक्षावभासरूपत्वात् । तदपि विषयांशे परोक्षावभासमिति चेत्, तथापि कथञ्चिज्जानामीत्यनुभवः प्रसज्येत । परोक्षावगतमपि हि धर्मादि जानामीत्येव प्रतिपद्यामहे । अथानन्यद्वारविषयावभासे ज्ञाने जानामीत्यनुभवो नान्यथेति चेत् । ननु तथैवादो भविष्यति । न खलु

तत्र विषयज्ञानद्वारभूतमस्ति, सुतरामज्ञानानुभवविरोधात् । ज्ञानावच्छेदकतया तु सर्वमेव जानामीत्यनुभूयत एव । अत एव केचिदनुव्यवसायवादिनोऽन्यज्ञानावच्छेदकतयापि विषयभाने प्रामाण्यस्वतस्त्वमिच्छन्ति । न च कस्यचिदेकस्यैव ज्ञानस्यायमभावानुभवः, घटं न जानामीत्याद्यविशेषानुभवविरोधात् ।

अपिचैवं स्मर्यमाणेऽर्थे न जानामीत्यनुभवप्रसङ्गः । विद्यमानस्यापि स्मरणस्य तत्तयेदानीमविद्यमानपूर्वानुभवावच्छेदकविषयावभासत्वाद् भाव्यनुभवान्तरानुत्पादस्यापि तत्र विद्यमानत्वाच्च । अज्ञानानुभवे सति विषयो विविच्यते । न तदनुभव आपाद्यः, न हि निमित्तमस्तीत्यारोप इति न्यायादिति चेत् । तर्हि यथानुभवं विषयो विविच्यताम् । न खलु किञ्चिदज्ञानं जानामि कथञ्चिन्न जानामि चेति कश्चिदनुभवति, येन ज्ञानविशेषाभावविषयो विनीयेत । न वा अज्ञानस्य शब्दवृत्तेरिव विषयावापस्तदुद्वापो वा, भ्रमोच्छेदप्रसङ्गात् । अपिच न जानामीत्यपरोक्षमनुभूयते सुखादिवदिति न ज्ञानाभावविषयोऽनुभवः ॥

---

## परमतम् ।

परमते तस्यानुपलब्धिलिङ्गत्वोपगमात् । यथोक्तं श्रुतप्रकाशिकायां—योग्यानुपलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः । पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः । अतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य सङ्कोचोऽर्थान्तरज्ञानं वा । पूर्वकालीनगजज्ञाने बुभुत्सिते तत्कालस्वापादिप्रतिसन्धानं घटादिज्ञानप्रतिसन्धानं वा गजज्ञानस्य योग्यानुपलब्धिः । सा च लिङ्गतया पूर्वकालीनज्ञानाभावनिश्चायिकेति । अपिच ज्ञानस्यावस्थान्तरमभावो यदि तत्कालविषयान्तरज्ञानं तत्प्रतियोगिनिरपेक्षं स्वयम्प्रकाशत इति न जानामीत्यनुभवविषयत्वानुपपत्तिः अभावव्यवहारे परं प्रतियोगिज्ञानापेक्षेति हि ते मतम् । अथापि प्रतियोग्यपेक्षया तदभावतया प्रकाशेत, ज्ञानाज्ञानविषयभेदानुभवापत्तिः । घटं न जानामीति च तदभेद एवानुभूयते । न च तदा तद्विषयमेव ज्ञानान्तरमनुभूयत इति युक्तं, स्वविषयरूषितप्रकाशस्वभावत्वात् । न च सुप्ते

---

१. 'केनचि' ख. पाठः.

रन्यत्र निर्विषयं घटादिज्ञानस्यावस्थान्तरमभावोऽस्ति, यो घटं न जानामीतीदानीमध्यक्ष्येत । अथ स्वगोचरविकासावस्थमेव ज्ञानं घटादिज्ञानाभावतया गृह्यत इति चेद्, एवमप्यज्ञानसविषयत्वानुभवानिर्वाहः । तस्मादात्मानं मेरुमन्यं वा न जानामीति तदेकावभासविषयावच्छिन्नभावरूपाज्ञानानुभव एवेति साम्प्रतम् । एवं सति प्रतियोगिज्ञानोपायगवेषणाक्लेशोऽपि न भवति ।

यत्तु — ज्ञानविरोधित्वादिना अज्ञाने प्रत्यये प्रमाणज्ञानाद्यवच्छेदकतया विषयावभासविरोधस्तवापीत्यादि ।

तत्र वदामः — मामन्यं वा न जानामीत्यज्ञानेऽवच्छेदकतया विषयोऽवभासते, अज्ञानस्य सविषयत्वोपगमात् । ज्ञाने तु तत्प्रतियोगितासम्बन्धेन तद्द्वारैव । यथा ज्ञानाभावाज्ञानमते घटाज्ञानमिति प्रतियोगिज्ञानद्वारा तदवच्छेदकतया घटादिरवभासते । यथा वा ग्रामागमनमिति स्थितौ वा गत्यभावे वा विरोधिगमनद्वारैव कारकतया ग्रामः, तद्वत् । ननु ज्ञानमपि स्वतः साश्रयविषयमेव निरूप्येत । सत्यं यत्र ज्ञानमेव निरूप्येत यथा घटं जानामीति । अज्ञाने तु निरूप्ये तदवच्छेदोपहृतविषयमेव तदज्ञानगोचरज्ञानाविशेषं निरूप्यते । समानाश्रयविषयतया च केवलं विरोधित्वावभासः । किन्तु सा नाज्ञानाद्वारिकेति न विरोधितैव, अज्ञानाद्वारकसमानविषयभावितया च न विरोधित्वभ्रमः । तत्रैवं सति न विरोधिविज्ञानं प्रथमं निरूप्यते, अज्ञानैकावभासत्वात् । न चैषा गतिरन्यस्य पटज्ञानस्य वान्यस्य वा घटज्ञाने[2]भावस्य घटा[3]विषयत्वेन ज्ञाने तद्विषयावच्छेदावभासस्य तद्द्वारत्वा[4]नुपपत्तेः । तथा च प्रतियोगिभूतज्ञानावच्छेदकतया विषयावभासे सत्यज्ञानानुभवविरोधः ।

यदपि तद्विषयज्ञानप्रतिबन्धकत्वलक्षणाज्ञानसविषयत्वानुभवविरोधात् तन्निरूपकप्रमाणज्ञानावच्छेदकतया विषयो[5]भानं तवाप्यापन्नमिति । तदप्यत एव विपन्नम् । न हि सविषयत्वमज्ञानस्य तद्विषयज्ञानप्रतिबन्धकत्वम् । तस्मिन् सति तदनु[6]त्पत्तिप्रसङ्गात् । किन्तु विषयोपरक्तव्यवहारयोग्यताकत्व-

१. 'ट', २. 'ना', ३. 'टादिवि', ४. 'त्वोपप', ५. 'य', ६. 'नुत्प्रस' ख. पाठः.

मेव ज्ञानादिवत् । तच्च प्रमाणज्ञानमनवेत्यापि सुनिरूपमिति । अत एव न भावरूपाज्ञानान्तरकल्पनागौरवम्, अज्ञानानुभवस्यानन्यविषयत्वात् । यद्यपि प्रमाणज्ञानाभावव्यवहारो न लोकसिद्धो नः प्रतिषेद्धव्यः, तथापि तदेवाज्ञानं स्वोपनेयविषयकतत्प्रतियोग्यपेक्षया तथा व्यवह्रियत इति व्यवस्थाप्यते । न च प्रमावृत्त्यद्वारवेद्यावच्छेद्याविद्यानुभवायोगः, अन्याज्ञान एव तदवच्छेद्यत्वविभ्रमोपपत्तेः । अन्यत्र तदवच्छेदके सुखशुक्तिरूप्यादिसम्भेदविभ्रमोपपत्तेर्वा । न च लाघवादभ्युपगतज्ञानावस्थाभेद एव न जानामीत्यनुभवविषयः स्यादिति युक्तम् । प्रमाणज्ञानप्रागुत्तरावस्थबुद्धिसत्त्वस्यावृत्तिविषयेऽस्मदिष्टाज्ञानातिरेकाद्, नित्यज्ञानस्यावस्थाभेदपरिणामानुपपत्तेरुक्तत्वात् । यत्तु अविपरिलोपिनो ज्ञानस्य तारतम्यवचनमुदाहारि अविद्यया तिरोहितत्वाच्चेत्यादि, तद् बुद्धिसत्त्वे[1]शुद्धितारतम्येन ज्ञानशक्त्यभिव्यक्तितारतम्यविषयम् । अभिव्यक्तिश्च न विकासपरिणामः, किन्तु तमोगुणवरणभेदे बुद्धिसत्त्वप्रसरोपाधिदर्शितबहुविषयत्वम् । तथा च श्रूयते 'पुरुषे त्वे वाविस्तरामात्मे'त्यादि । तदनिर्वचनीयाज्ञानमेकमेव प्रतियोगिविकल्पेन ज्ञानाभावानुभवालम्बनमिति युक्ततरम् । अनन्तावस्थाभेदविषयत्वे मम मेरुज्ञानं नास्तीत्यादिव्यवहारस्य गौरवात् ।

यत्तु — ज्ञानविरोधित्वादि[2]ना अज्ञानाध्यक्षानुपपत्तिः, इदानीमसति विरोधिभूतज्ञाने तद्योग्यतामात्रस्यायोग्यत्वादिति । तद् ज्ञानमात्रविरोधित्वानुभवोपपादनेन प्रत्युक्तम् । तद्योग्यताया अपि फलबलेनाज्ञानसाक्षियोग्यत्वोपगमात् । तद्विरोधी चाज्ञानाद्वारकतद्विषयावभासः । स च प्रमाणद्वारकोऽन्यथा वेत्यन्यदेतत् । परोक्षेऽपि विज्ञाने विषयसत्तामात्रावरणनिवृत्तिरिष्टैव । तथा चानन्तरमेव वक्ष्यते । एवमपि ब्रह्मात्मनि परोक्षत्वादिविभ्रमानुरोधात् तावदज्ञानमनुवर्तते, स न यावदवगतिपर्यन्तमवभासते । तावच्च नावगतिपर्यन्तमवभासते, स यावन्निश्शेषमसम्भावनादिविनिवृत्तावशेषविशेषनिषेधविकल्पवृत्तिमवभासयति । तथापि न परोक्षावगते न जानामीत्यनुभवप्रसङ्गः, तदज्ञाने तज्ज्ञानसामान्यनिरूप्यरूपभेदापायात् । किन्तु ब्रह्मात्मानं शास्त्रादवैमि, परं न साक्षादित्यनुभूयत एव तदज्ञानम् । न चात[3] एव साक्षात्काराभावविषयोऽयमनुभवः । जिज्ञासापि चेत् तद्विषयैव स्यादप्रतीतरूपान्तरविषया वेति

१. 'त्वता', २. 'दि अ', ३. 'यस्यैव' ख. पाठः.

साम्प्रतम् । अनन्यथासिद्धाविशेषाज्ञानानुभवजिज्ञासाद्यनुरोधेन भावरूपाज्ञानक्लृप्तौ तद्विषयत्वे लाघवाद्, अतिरिक्तज्ञानाभावविषयत्वे च न लाघवमित्युक्तम् ॥

---

## तिरोधानम् ।

यदपि नात्मनोऽज्ञानानुभवः सम्भवति, मुक्तिदशानिर्विशेषस्वरूपानुभवस्वभावत्वात् स्वभावादज्ञानानुभवत्वे [1]चानिर्मोक्षप्रसङ्गादित्यादि । तदपि तन्त्रविनेयदासजनरञ्जनमात्रम् । प्रागागमिकज्ञानादात्मनोऽविद्ययैवाविद्योपसृष्टावभासस्वरूपत्वात् । इदमेव च स्वरूपावभासे[2]स्वभावस्याप्यात्मनोऽनाद्यविद्यातिरोधानं यदुत न प्रकाशते नास्तीति व्यवहारार्हतापादनरूपं न प्रकाशनाशादिः । अत एवाज्ञानानुभवात्मप्रकाशतिरोधानयोरनादितया अव्यतिरेकादन्योन्याश्रयो निरस्तः । एवं सति स[3]त्तया तिरोधायानुभूयमानस्याज्ञानस्य प्रातीतिकत्वं तत्त्वज्ञाननिवर्त्यत्वं वा न स्यादित्यादि निर्विषयाटोपस्तान्त्रिकस्योपहास्यः । न हि साक्षिणाभूतेनाज्ञानमनुभूयते, अनुभवत एव साक्षित्वात् । विषयदर्शनोपाधिकं हि तत् । तन्मूलश्च परागर्थानुभव इति न तिरोधानादिकल्पनानर्थक्यम् । अत एवाज्ञानप्रयुक्तत्वादज्ञानादिविपर्यासात्मताया नानिर्मोक्षप्रसङ्गः, विपर्यासस्य स्वरूपप्रतिष्ठाविरोधित्वात् । न च क्वचिदपि विपर्यासस्वरूपेण बाध्यते, सर्वत्रैव विषयोपधानबाधेऽपि बोधस्वरूपपरिशेषात् । यथाहुः 'न बोधो बाध्यत' इति । न हि तदनुभवत्वं तस्यौपाधिकं बाधितमिति स्वरूपबाधोऽपि, नलकाद्युपाधिकदीर्घत्वादिबाधेऽपि नभसः स्वरूपपरिशेषदर्शनात् । अन्यथा अचेतनत्वापत्तेः । बोधस्वरूपभेदश्च निराकृतः ॥

---

## अविशदावभासः ।

यदप्यविद्यावृतं ब्रह्म न किञ्चित् प्रकाशेतेति स्वभावहानिः । किञ्चित्प्रकाशे वा सांशत्वप्रसङ्ग इत्यादि । तदपि न । राहुग्रस्तेन्दुवदविद्योपसृष्टस्यैव

१. 'च', २. 'सस्वरूपस्व', ३. 'त्ताति' ख. पाठः,

प्रकाशोपगमात् । सोऽयमविशदावभासो नाम यदविद्यावग्रहावभासः, न तु सांशसविशेषस्य सतो विकलावभासः। भासमानरूपेणैव वैशद्यावैशद्यविकल्पस्य सर्वानुभवासिद्धत्वात् । अन्यथा न किञ्चिदपि विशदावभासं स्याद्, एकस्यापि हेतुस्वरूपकार्यतो यावद्विशेषस्य सर्वदैव दुरधिगमत्वात् ।

"नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित्"

इति ऋतुपर्णः । न हि यत् प्रकाशते तद्विशदमेवेति नियमः, अज्ञानावच्छेदकतया अविशदमवभासात् । तदवभासस्य च तदज्ञानसंशयादिसहत्वमेवावैशद्यम् । न त्वंशान्तरज्ञानसाहित्यं, तस्मिन् प्रकाशमानेऽप्रकाशमाने तदवैशद्यग्रहणायोगात् । न च तत्त्वज्ञानेनाज्ञानोपसर्गलक्षणावैशद्यबाधे ब्रह्म विशदस्वरूपावभासमाधीयते, येन तदात्मनो मुक्तस्यानित्यता स्यात् । हन्त तस्य स्वभावत्वे अज्ञानादिविरोधः। न, नैसर्गिको ह्यविद्योपसर्गावभासविपर्यासः। स च न स्वभावं विहन्ति स्रगादिस्वभावमिवोरगादिविपर्यास इति ।

अथवा यावद्विशेषनिषेधविकल्पाखण्डाकारमानवृत्त्यभिव्यञ्जनमेवावभासमात्रस्य ब्रह्मणो वैशद्यं, सर्वस्यैव मानवृत्त्यभिव्यक्तचैतन्यतादात्म्येनैव विशदावभासित्वात् । एवंचाविद्यादिबाधे वैशद्यावैशद्यविकल्पातीतप्रकाशानन्दसत्तामात्रस्वरूपनिष्ठाकैवल्ये नानित्यत्वशङ्कावकाश इति ।

तस्माद् ब्रह्म न जानामि धर्मं वेत्त्यविशेषतः ।
अध्यक्षानुभवो युक्त्या भावाज्ञानैकगोचरः ॥

---

## अविद्यानुमाने पक्षनिष्कर्षः ।

अनुमानमपि । अत्रानधिगततथाभूतार्थनिश्चयमात्रं पक्षः । अपरोक्षवदज्ञानाद्धारकविषयावभासितया मानतया च परोक्षज्ञानस्यापि स्वोद्भासिताकाराज्ञाननिवर्तकत्वोपगमेनाबाधात् । अत एवोक्तमाकरे 'परोक्षे सुषुप्तिव्यावृत्तिमात्रं क्रियते' इति । अपरोक्षवत् परोक्षस्यार्थविशेषरूपानवभासितया तत्संशयाद्यनुकूलमज्ञानं तिष्ठत्येव । सुप्तौ तु सामान्याकारज्ञानमपि नास्तीत्यभिप्रायः । न च ज्ञानाभाव इति प्रतियोगिनिरूप्यरूपभेदादज्ञानादतिरिच्यते । अवृत्तिवि-

---

१. 'शवि', २. 'हमे' ख. पाठः.

षये बुद्धिसत्त्वस्यापि तदात्मनैव ज्ञानाभावत्वात्। अन्यथा सुप्तादावन्यो ज्ञानाभावः, अन्यश्च जागरादाविति तदनुभवविषयभेदकल्पनागौरवात्। तथा च सुप्तिव्यावृत्तिमात्रमिति तद्विषयाज्ञाने सत्येव ज्ञानाभावव्यावृत्तिरनुमित्यादिज्ञानरूपा क्रियत इति[1] न व्याख्येयम्। न च मौढ्यमज्ञानादन्यत्। अत्राहं मुह्यामि इदमहं न जानामीति तुल्यानुभवत्वात्। न च

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"

'मूढोऽयं नाभिजानाति', 'अज्ञानमूढो जनः' इति भेदव्यपदेशादतिरेकः शङ्क्यः, तस्यैवाश्रयविषयोपाधिभेदेन प्रतियोगिनिरूप्यानिरूप्यरूपभेदेन वा स्वरूपावरणरूपप्राधान्यभेदेन वा निर्देशभेदान्यथासिद्धेः। 'अज्ञोऽयं न विजानाति', 'जानन्त एव जानन्ती'त्यादिवद् विषयवैशिष्ट्याद्वा। तथा च परोक्षे मौढ्यव्यावृत्तिमात्रं क्रियत इति तदाका[2]रज्ञाननिवृत्तिमात्र क्रियत इति[3] पर्यवस्यति। अन्यथानुमानादि न मानं स्यात्।

"अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते"

इति ह्युक्तम्। शब्दलिङ्गावगतेऽपि वस्तुरूपे कदापि न जानामीत्यननुभवेन तदाकाराज्ञानसत्त्वे मानाभावाच्च। प्रामाणिके हि तत्सत्त्वे तदाकारवृत्तिप्रतिबन्धाद् वा तदाकारवृत्त्यसमवहितसाक्ष्यभावाद् वा तदज्ञानानुभव एवेति कल्प्येत। अन्यथा शीताननुभवो वह्नेरुष्णवृत्तिप्रतिबन्धादिति कल्प्येत। अवगताकारे संशयाद्यभावेन तदनुमानायोगाच्च। अन्यथाकारान्तरसंशयादध्यक्षेऽपि तदज्ञानानिवृत्तिप्रसङ्गात्। यद्येवं ब्रह्मापरोक्षमनपेक्षणीयम् प्राप्तं, शाब्दज्ञानादेवाविद्यानिवृत्तौ कृतकृत्यत्वादिति चेत्। न। तस्य भेदाविकल्पापरोक्षविपर्याससहस्य सत्तामात्राज्ञानविरोधित्वेऽपि, ब्रह्मात्मानं शास्त्रादवैमि न साक्षादित्यनुभवबलेन तत्र परोक्षत्वादिविभ्रमानुकूलाज्ञानस्य साक्षादनुभवनिवर्तनीयत्वात्। निसर्गनिरंशेऽपि ब्रह्मणि नास्ति निर्विशेषमद्वितीयं ब्रह्म नाहं ब्रह्मेत्येवमाविद्ययैव तदंशभेदारोपेण तद्व्यवस्था, अविरोधात्।

तत् किं प्रतिविषयं प्रत्याकारं चाज्ञानानि भिद्येरन्। ओमित्येके, यानि नाम तूलाज्ञानान्युच्यन्तेऽवस्थाज्ञानानि च।

---

१. 'ति व्या', २. 'रा', ३. 'ति विष' ख. पाठः.

एकस्यैव तत्तदाकारनिरूपणीयरूपभेदा इत्यपरे, ये नामावरणभेदा उच्यन्ते।

तस्यैवांशभेदा इत्यन्ये। आद्यपक्षे ज्ञानादज्ञानस्यैव निवृत्तिः। द्वितीये तद्विषयताविशिष्टरूपस्य। तृतीयेंऽशभेदस्यैव। सोऽपि ह्यज्ञानमेव तमोंश इव तम इति न ज्ञानेनाज्ञानं[1] निवृत्तमित्यनुभवविरोधः। अन्ये तु सर्वथा दुर्निरूपरूपमखण्डमेकमेवाज्ञानं तत्तदवच्छेदेन ज्ञानादभिभूयते, तत्तदज्ञाननिवृत्त्यनुभवश्च प्रागनुभूताज्ञानप्रतियोग्यपेक्षया तादात्विकतत्तज्ज्ञानविषय एवेत्याहुः।

सर्वथैव परोक्षज्ञानस्यापि स्वविषयेऽपरोक्षतुल्यतैवेति। अथैवमयमग्निमानित्यनुमिते श्रुते वा इदानीमयमग्निमान्नवेति संशयो न स्यात्। अध्यक्षितेऽपि वा स्यात्। तत्रापि नीरूपकालभेदस्याविषयत्वेन तदवच्छेद्याज्ञानसम्भवात् कथञ्चन स्यात्। न हि प्रत्यक्षमित्येवाविषयेऽप्यज्ञानविरोधि, अतिप्रसङ्गात्। न च देशकालयोरज्ञानमेव नास्ति, स्वभावादेवाज्ञानादिवत् प्रातीतिकत्वप्रसङ्गात्। परोक्षेऽपि कालादिभेदावच्छेद्यसंशयाद्यनापत्तेश्च। अतोऽध्यक्षं सन्निहितवर्तमानतारूपावभासि स्वभावादेव, कालादेः षडिन्द्रियवेद्यत्वोपगमात्। ज्ञानसामान्यसामग्रीगम्यत्वेऽपि परोक्षे कालविशेषावच्छेदानाकलनेन तदज्ञानसंशयादेरनुभवसिद्धस्यानिवार्यत्वात्। चन्द्रप्रादेशिकत्वभ्रमस्त्वनुवर्तते। आगमेन तत्परिमाणभेदसत्ताज्ञाननिवृत्तावप्यपरोक्षनिवर्तनीयाज्ञानरूपभेदानुवृत्तेः, चन्द्रपरिमाणभेदमागमाद्वेमि न साक्षादित्यनुभवात्। ब्रह्मापरोक्षेऽपि हि भेदभ्रमावृत्तिरुपेयते, विक्षेपांशेनाज्ञानानुवृत्तेः। दृश्यते च मन्दान्धकारे समीपमुपसर्पतो रज्जुतत्त्वसाक्षात्कारेऽपि तदेव किञ्चिदपसर्पतः सर्पविभ्रमानुवृत्तिः। यद्येवं[2] सविषयाज्ञानानुमितिरेव विरुध्येत। न विरुध्येत, विषयस्य तत्राविशदावभासित्वात्। न हि प्रमाणज्ञानविषयतैव विशदावभासिता। किन्त्वज्ञानाद्वारावभासिता। अज्ञानानुमित्या च तदवच्छेदकतयैव विषयो भासत इति।

अथैवमपि यद्यनधिगतत्वमाज्ञानविषयत्वं, तस्य सिद्धौ सिद्धसाधनम्। असिद्धावाश्रयासिद्धिः। अत एव न ज्ञातत्वाभावः, सर्वस्यैव कदापि केनापि

---

१. 'नोज्ञा', २. वावे' ख. पाठः.

ज्ञातत्वेनाश्रयासिद्धेः । समानाधिकरणतद्विषयज्ञानसंस्कार[1]समानकालीनतज्ज्ञानाभाव इति चेत्। न। सिद्धान्तासम्प्रतिपत्तेः । अन्यथा तेनैव लाघवान्न जानामीत्यनुभवस्य निर्वाह्यत्वापत्तेः, सर्वस्यैव सर्वं मेयवदित्येवं ज्ञानाच्चेति।

उच्यते— उक्तासमानकालीनतदज्ञानानुभवविरोध्यविषयत्वं स्वसामग्रीकालीनस्वसमानाधिकरणतदज्ञानानुभवविरोध्यविषयत्वं न जानामीत्यनुभवविषयनिरूपकत्वं वा विवक्षितम्, अज्ञानानुभवतद्विरोधिज्ञानयोः सर्वसम्प्रतिपत्तेर्ना[2]सिद्धिः । न हि न जानामीत्यनुभूयमाने धर्मिणि विप्रतिपत्तिः, किन्तु तस्यानिर्वचनीयभावत्वे । एतेन गोघटादिनिश्चया नानधिगतार्था अनात्मावरणानुपगमादिति निरस्तम् । तत्रापि गां न जानामीत्यनुभवविरोध्यविषयत्वादिसम्प्रतिपत्तेः। एवं च स्मृतिर्धारावाहि ज्ञानं भ्रमो वा न पक्षः, अधिगतातथाभूतविषयत्वात् । अज्ञातसत्तया सति बोद्धरि घटादीनामबाधितत्वव्यवहारान्नासिद्धिः ।

अन्ये तु— जन्यसविकल्पकाजन्यचाक्षुषप्रमाणज्ञानं धारावहनप्रत्यभिज्ञापरोक्षव्यावृत्तं पक्षमाहुः ।

एवमप्यनुक्षणं विजातीयान्तरितचाक्षुषज्ञानपरम्परासम्भवात् तस्यापि पक्षत्वापत्तिः, न हि तद् जन्यसविकल्पकजन्यं, परस्यापि समानविषयज्ञानान्तरायाद्, अन्यविषयस्य च तत्राजनकत्वात् । न च तदपि साध्यवदेव, अप्रशिथिलपूर्वानुभवसंस्कारे सति तदज्ञानाननुभवेन तन्निवर्त्याज्ञानासिद्धेः। अन्यथा धारावहनेऽप्युत्तरोत्तरनिवर्त्याज्ञानसम्भवेन तद्व्यवच्छेदाय पक्षविशेषणानर्थक्यादिति चिन्त्यम् ॥

---

### साध्योपपादनम्।

साध्ये च स्वप्रागभावव्यतिरिक्तत्वमज्ञानस्य सिद्धान्ते यद्यपि बाधितं, ज्ञानप्रतियोग्यपेक्षया तस्यैवाभावबुद्धिबोध्यत्वात् । स्वविषयावरणेत्यपि बाधितम्, अनात्मविषयावरणानिष्टेः। प्रमातृसंविदसम्भिन्नसतो जडस्यानावरणेऽपि प्रकाशाप्रसक्तेः । स्वनिवर्त्यत्वं चायुक्तम्। आत्मन्यनिवर्त्यत्वव्याप्तानादिभावत्वोपगमविरोधात् । स्वदेशगतत्वमपि बाधितं, प्रमाणज्ञानं हि प्रमातृदेशमज्ञानं चात्ममात्राश्रयविषयमुपेयत इति । वस्त्वन्तरेत्यपि बाधितम्, आत्मनो

1. 'र' ख. पाठः. 2. 'सा' क. पाठः.

विभज्यमानस्य तस्य निस्सत्ताकतया वस्तुत्वायोगात्। तथा दृष्टान्तेऽपि साध्यवैकल्यमुभयसाधारणावरणस्य दुर्निरूपत्वात्। प्रकाशप्रतियोग्यपेक्षया तमस एव तत्प्रागभावत्वाच्च। तथापि

"यादृङ्नियममास्थाय परः प्रत्यवतिष्ठते।
स तेन प्रतिवक्तव्यस्तादृगर्थविचारणे॥"

इति न्यायात् परबुद्ध्या परो बोधनीय इति ज्ञानावस्थान्तरस्यैव परमते तत्प्रागभावत्वात् तेनार्थान्तरवारणाय स्वप्रागभावव्यतिरिक्तेति न बाधितम्। अस्मदभिमताज्ञानस्य तद्व्यतिरिक्तत्वात्। सिद्धान्तेऽपि प्रतियोग्यपेक्षया ज्ञानप्रागभावत्वेऽपि स्वरूपेण तद्व्यतिरिक्तत्वस्याप्युपपत्तेरबाधात्। अथवा ज्ञानप्रागभावो ज्ञानशक्त्यवस्थः प्रमातैवेति मते तद्व्यतिरिक्तत्वमज्ञानस्याबाधितम्। एवं च स्वप्राक्पदवैयर्थ्यमपि निरस्तम्। स्वकार्यप्रतियोग्यपेक्षया अज्ञानस्यापि प्रागभावत्वेन बाधात्। स्वविषयावरणत्वं चाबाधितं, न प्रकाशत इति व्यवहारार्हतालक्षणस्यावरणस्यानात्मन्यप्यज्ञानाधीनस्य सम्भवाद्, न जानामीत्यनुभवविषयत्वतौल्यात्। इयानेव विशेषो यदात्मनः स्वरूपावभाससामग्र्ये सत्यज्ञानोपसर्गादेवावरणम्, अन्यस्य तु तस्य तदाकारवृत्तेर्वा सति प्रमातरि तदसम्भेदापेक्षादिति। अत एव तत्र ज्ञानाभावादेव न जानामीत्यनुभव इति परेषां विभ्रमः। आचार्याणां पुनरात्मावरणाभाववचनं स्वाधिष्ठानताप्रयोजकतद्विषयत्वाभावपरम्। अन्यथा मामन्यं च न जानामीति तुल्यानुभवविरोधात्। तच्च स्वजनकादृष्टेनार्थान्तरवारणाय। न च स्वविषयांशवैयर्थ्यं, समानविषयत्वेन स्वनिवर्त्यत्वोपपादनार्थत्वात्। स्वनिवर्त्यत्वमपि[2] युक्तम्, अज्ञानाद्वारकवस्तुस्वरूपावभासेन तत्सत्तानिश्चयरूपेणाज्ञाननिवृत्तेरनुभवसिद्धत्वात्। अन्यथा अज्ञानावच्छिन्नानभ्यासदशापन्नानुभवादेरिव प्रमाणज्ञानस्यापि विषयपरिच्छेदेन तत्सत्तानिश्चयरूपत्वस्यायोगात्। यद्यपि न वस्तुस्वरूपावभासादज्ञाननिवृत्तिरतिच्यते, तथापि स्वाधीनध्वंसप्रतियोगिताकत्वं स्वनिवर्त्यत्वमविरुद्धम्। अनादिभावत्वं चानिवर्त्यत्वेऽप्रयोजकं, व्यर्थविशेष्यत्वादात्मत्वादेरुपाधित्वाच्च। धर्मिग्राहकमानेनाज्ञाननिवृत्त्यनुभवेन च

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः"

१. 'रनात्मा', २. 'पि अज्ञा' ख. पाठः.

इत्याद्यागमेन च बाधात् । इदं च सर्वविषयाज्ञानानुभवोपपादकसकलकरणविश्रान्तिहेत्वदृष्टेनार्थान्तरवारणाय । स्वदेशगतत्वं चाबाधितं, जीवस्यैव जानामि न जानामीति तुल्यानुभवज्ञानाज्ञानाश्रयत्वात् । ननु नाहङ्काराश्रयमज्ञानं, प्रागेवाहमादिकारणतया लब्धाश्रयत्वात् । अविद्यामयस्यैवात्मनोऽहमध्यासात् तु न जानामीत्यवभास[1] इत्युक्तम् । तर्हि स्यादाश्रिताहंवृत्त्युपाधिनार्थप्रकाशोऽज्ञानमपि जीवाश्रयमेव । प्राचामज्ञानस्य चिन्मात्राश्रयविषयत्ववचनं तु स्वाश्रयीभूतजीवविभागस्यापि चिदात्मनि स्वैकोपाधितया तत्स्वरूपानतिवृत्त्यभिप्रायं, स्वैकोपाधिपरिच्छेद्यकालभेदाश्रयस्य वर्तमानादिवस्तुनः कालमात्राश्रयत्ववचनवत् । अथवा स्वेन दिश्यते सूच्यते भास्यत इति स्वदेशो विषय उच्यते । तद्गतत्वं चाज्ञानस्य विषयतासम्बन्धेनापि घटते, अज्ञातो घट इत्याद्यनुभवात् । एतदपि स्वनिवर्त्यत्वोपपादनाय व्यासङ्गादिनार्थान्तरवारणाय च वचनीयम् । वस्तुत्वं च भावत्वमात्रमिह विवक्षितम् । तच्च प्रातिभस्यापीति न विवक्षितसाध्यबाधः । न च दृष्टान्ते साध्यवैकल्यं, स्वपदस्य समभिव्याहृतपरत्वात् । न प्रकाशत इति व्यवहारानुगुण्यापादकत्वस्यावरणस्य तमोज्ञानसाधारणत्वात् । आलोकस्यान्यस्य वापेक्षया[2] तमसोऽभावत्वेऽपि तदुपादानावस्थाया एव तत्प्रागभावतया तमस आलोकप्रागभावातिरेकात् ।

यद्वा अयं घट इत्यादिज्ञानव्यक्तिविशेष एव पक्षः, लाघवात् । अन्यथा पक्षतानुगमगवेषणगौरवात् । तत्र च ज्ञाननिवर्त्यानादिभावरूपाज्ञानसिद्धौ तद्दृष्टान्तेन ब्रह्माज्ञानस्यापि शक्यसाधनत्वात् ॥

---

## हेतुनिष्कर्षः ।

हेतुरप्यप्रकाशितार्थप्रकाशत्वं भासमानत्वे सति स्वविषयज्ञानमनपेक्ष्य[3] साक्षात्परम्परया वा स्वसामग्रीकालीनस्वविषयाज्ञानानुभवादियोग्यताविरोधित्वम् । अक्षे लिङ्गादौ च व्यभिचारवारणाय सत्यन्तमनपेक्ष्यान्तं च । पक्षदृष्टान्तसाधारण्याय साक्षादित्यादि । धारावाहिद्वितीयादिज्ञानाव्यभिचाराय स्वसामग्रीत्यादि । अथवा स्वसामग्रीकालस्वविषयाज्ञानानुभवयोग्यतापादकाविरोधित्व-

---

१. 'सत इ', २. 'क्षात', ३. 'मपे' ख. पाठः.

मेव हेतुः। प्रदीपप्रकाशस्यापि तदापादकान्धकारविरोधित्वाद् न दृष्टान्ते साधनवैकल्यम् । परमतेऽपि ज्ञानस्य तादृशस्वप्रागभावविरोधित्वान्नान्यतरासिद्धिरिति ।

अन्ये तु — स्वविषयावरणसमयावृत्तित्वे सति तन्निवर्तकत्वं विवक्षितम्। ज्ञानजननेन तन्निवर्तकाक्षादावव्यभिचाराय सत्यन्तम्। न चायं साध्यसिद्धेः प्रागज्ञानासिद्धः, प्रागेव संशयाद्यनुकूलस्यानिरूपितभावाभावरूपविशेषस्याज्ञानावरणस्य ज्ञाने सति तन्निवृत्तेश्च सर्वसिद्धत्वाद्, निरुक्तस्वरूपविशेषसिद्धेरेवानुमानाधीनत्वादित्याहुः। अत एवाज्ञानानुमितौ नानैकान्त्यं, स्वप्रागभावव्यतिरिक्तत्वादिरूपभेदेन विवक्षितहेतुसत्त्वे तद्विषयतूलाज्ञानादिना साध्यस्यापि सत्त्वात्। अनन्यनिरूप्यस्वरूपेण साध्याभावे हेतोरप्यभावात्। न जानामीत्येतावतः स्वरूपस्यानिदम्प्रथमानुभवसिद्धत्वात् । अन्यथा सर्वानुभवविरुद्धो ज्ञानाज्ञानानुभव आपद्येत। स चानुभवो यद्यहङ्कारधर्मो यदि वा तदुत्तीर्णसाक्षिचैतन्यं, सर्वथैव स्वभावसिद्ध इत्यतोऽनुमानप्रामाण्यादभिमताज्ञानसिद्धिः। न त्वभिमताज्ञानसिद्धौ तस्य साक्षिगम्यत्वादनुमानप्रामाण्यं येन चक्रकमापद्येत। अस्तु वा अज्ञानानुमितावनैकान्त्यं, को दोषः । अनेकान्तहेतुनापि यदृच्छासंवादिसम्यग्ज्ञानजननाविरोधात् , प्रागज्ञानानुमितेरनैकान्त्याप्रतिसन्धानेन तदप्रतिबन्धाच्च। अत्र च निरुक्तहेतुसाध्यविशेषणप्रयोजनमजानानमजिज्ञपाम। न चाप्रयोजनकत्वम्, अनादिभावरूपज्ञाननिवर्त्याज्ञानाभावे स्वयम्प्रकाशचिद्रूपत्वे सत्यात्मनः संसारविपर्यासानुपपत्तेर्मुक्तिशास्त्रानारम्भस्य च प्रसङ्गात्।

यत्तु — ईदृशं चेदज्ञानं न ज्ञानमात्रब्रह्माश्रयविषयं स्यात्, शुक्त्यज्ञानवदित्यादि । तदसारम्, आत्माज्ञानानुभवादिप्रतितर्कहतत्वात्। अपि च न ज्ञानाभाव एव शुक्त्यज्ञानं, शुक्तिं न जानामीत्यनुभवविरोधात् । तथा चाज्ञानावच्छेदकतयापि भासमानं प्रकाशसम्भेदेनैव भासत इति वाच्यम्, अन्यथातिप्रसङ्गात्। न चाज्ञानोपधानेन तदनुभवस्य सतः शुक्तिसम्भेदः, उपधानभेदात्। किन्तु शुक्तिसम्भिन्नप्रकाश एवाज्ञानोपधाने तदज्ञानानुभवः सम्पद्यते। प्रमाणवृत्त्युपधाने च तदज्ञानानुभव इति शुक्त्यज्ञानस्यापि ज्ञानविषयतया दृष्टान्तस्यापाद्यवैकल्यम्। तस्य चानादेः साद्याश्रयत्वायोगेन चि-

दात्माश्रयत्वावश्यम्भावाच्च । ज्ञातृसम्बन्धावभासे च गतिरुक्ता । एवं च यदि न ज्ञानाश्रयविषयं स्यादज्ञानमेव न स्यात् । न च ज्ञानमात्रावरणमज्ञानं स्वसमानविषयज्ञानाभावेन ज्ञाननिवर्त्यं न स्यादिति युक्तं, लाघवेनाज्ञानाद्वारकविषयावभासस्यैव तद्विरोधित्वे तत्र तद्विषयकत्वस्य गौरवेणाप्रयोजकत्वात् । प्रमाणज्ञानस्य तद्विषयत्वोपगमाच्च । तस्य तदनुषङ्गनिरूप्यत्वाद् घटादिज्ञानस्यापि निरूप्यतायां तदविनाभाव एव हि तद्विषयत्वमिति । अत एवाज्ञानानाश्रयत्वादौ ब्रह्मणो ज्ञातृत्वादिप्रसङ्गोऽपि प्रत्युक्तः, अप्रयोजकत्वात् । परमते ह्यात्मनो ज्ञातृत्वं स्वभावः करणकलेबरसम्बन्धोपाधिकं वा । सिद्धान्ते च विषयाहङ्कारसम्बन्धोपाधिकमेव, अज्ञानस्यापि विषयान्तरसामान्येनैव ज्ञातृत्वोपाधित्वात् । न च शुक्त्यादेरज्ञानाविषयत्वेन ज्ञेयत्वं, किन्त्वज्ञानत्वेनैव, लाघवात् । ब्रह्मणोऽपि प्रमाणज्ञानविषयत्वोपगमाच्च । अत एव ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्गः प्रत्युक्तः, अज्ञानस्य स्वाद्वारकविषयावभासनिवर्त्यत्वोपपत्तेरप्रयोजकत्वाच्च ।

यदपि प्रमाणज्ञानं न स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकमित्यादि, तदतितुच्छम् । स्वप्रागभावव्यतिरिक्ताज्ञानसिद्धौ तत्पूर्वकत्वनिषेधे बाधात्, तदसिद्धौ तन्निषेधानुपपत्तेः । घटज्ञानप्रागभावातिरिक्ताज्ञानपूर्वकत्वं पटज्ञाने प्रसिद्धं घटज्ञाने निषिध्यत इति चेत्, तर्हि स्वप्रागभावव्यतिरिक्तपटज्ञानप्रागभावरूपाज्ञानपूर्वकत्वसम्भवेन घटज्ञानस्य तन्निषेधे बाधः स्यात् । दृष्टान्तोऽपि साध्यविकलः, अस्मदभिमताज्ञानानुमितेरपि स्वप्रागभावव्यतिरिक्तस्वविषयीभूताज्ञानपूर्वकत्वात् । अथ निरुक्तविशिष्टसाध्यनिषेध एव साध्येत, तथापि धारावहनद्वितीयादिसाधारणाबाधितज्ञानस्यैव पक्षत्वे अंशतः सिद्धसाधनम् । पक्षतावच्छेदकैक्ये नायं दोष इति चेत्, तन्नानात्वेऽपि न स्यात् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धौ सिद्धसाधनत्वात् । नानावच्छिन्नपक्षेषु कस्यापि तदनंशत्वेनांशतः सिद्धसाधनमित्युत्सन्नसंकथमापद्येत । अथास्मदभिमत एव पक्षः यदि प्रमाणज्ञानत्वं, हेतुरपि तथा स्यात् । दृष्टान्ते साधनवैकल्यम् । अस्मदभिमताज्ञानानुमितेर्धारावाहि[2]नो वा निरुक्तानधिग[3]ताविषयत्वात् । किञ्चिदेकमवच्छेदकमनिरूप्य तद्योग्यताया दुर्ज्ञानत्वात् ।

१. 'कस्य', २. 'नो नि', ३. 'त', ४. 'दनिरू' ख. पाठः.

अत एव नाबाधितज्ञानत्वमपि हेतुः, अज्ञानानुमितौ दृष्टान्ते साधनवैकल्यात् । अज्ञातसत्तया हीहाबाधितत्वं विवक्षितम् । न चाज्ञानमज्ञातमस्ति, नित्यसाक्षिसिद्धत्वोपगमाद् , अधिगतविषयत्वस्यापोधित्वाच्च ।

यदपि ज्ञानस्याज्ञानानिवर्तकत्वानुमानं शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वादिति । तत्र किन्नामेदं शक्तिविशेषोपबृंहणं, यदीश्वरज्ञानादौ वस्तुविनाशकत्वप्रयोजकं व्यवतिष्ठेत । अस्मदादिज्ञानेऽपि कार्योन्नेयस्वरूपशक्तिव्यतिरेको हि दुरवधारणः । सहकार्याधेयशक्तिरीश्वरज्ञानेऽपि दुर्भणा, अविकारित्वात् । अन्यथेश्वरस्य नित्यसर्वज्ञत्वव्याघातात् । अत एव न भावनोपचयाहितत्वमीश्वरज्ञानस्य नित्यत्वात् । कर्मसाचिव्यममुष्य शक्तिविशेषोपबृंहणं, योगिज्ञानस्य च योगजधर्मोपचितत्वमिति चेत्, तर्हीदमेवास्मदादितत्त्वज्ञानस्यापि शक्तिविशेषोपबृंहणमित्यसिद्धिः । निवर्त्यसहभावश्चोपाधिः । ज्ञानाज्ञानयोरालोकतमसोरिव समानविषये नियतपर्यायवृत्तितया विरोधस्य सर्वानुभवसिद्धत्वेन बाधश्च । अपिचैवं किमिह ज्ञानं न वस्तुनो विनाशकं ततो ज्ञाननाश्यमज्ञानमवस्त्विवति विवक्षितम्, आहो अज्ञानस्य वस्तुत्वाद् ज्ञानं तदनिवर्तकमित्येव । आद्येऽवस्तुनोऽलीकस्य निरुपाख्यस्याज्ञाननिवर्त्यत्वविरोधः । द्वितीये चाज्ञानमनिवर्त्यं निवर्त्यं वा स्यात् । आद्ये संसाराविरतेरनिर्मोक्षप्रसङ्गः । द्वितीये च स्वत एव निवृत्तौ निरपेक्षहेतोरक्षेपेण नित्यनिवृत्तावज्ञानसत्त्वानुभवविरोधः । न च क्रिया वान्यद् वा न जानामीत्यनुभवविषयनिवर्तकं प्रमाणयितुं शक्यम् । अपिच तव स्वप्रागवस्थारूपवस्तुविनाशकत्वेन बाधः । अत एव नाज्ञानं ज्ञानमात्रनिवर्त्यं भावरूपत्वादित्यपि न, त्वदभिमताज्ञानस्य भावस्यैव ज्ञानमात्रनिवर्त्यत्वात् । अत एव प्रशिथिलमूलतया तर्कोऽप्ययमाभासः । अपिच भ्रममूलदुःखभयादेस्तत्त्वधीमात्रनिवर्त्यत्वादनैकान्त्यम् । क्षणिकस्यापि निर्हेतुकविनाशे वैनाशिकराद्धान्तापातात् । न च फलविनाश्यता,[1] स्वाश्रयनाशाधीननश्वरव्यतिरिक्तक्षणिकत्वादिति वाच्यम् । तत्त्वज्ञानानन्तरप्राक्कालदुःखादेरफलान्तरत्वेन तदयोगाद्, दुःखादेरहङ्कारपरिणामस्य यावद्विरोधिपरिणामान्तरोदयमनुवृत्तिसम्भवेन क्षणिकत्वे मानाभावाच्च । स्वहेतुसमवधानसमयोपलम्भनियमस्य ज्ञानादौ दुःखादौ वा परिणा-

1. 'दिवा' ख. पाठः.

मान्तरसामग्रीसमसमयतयार्थिकत्वेन तदप्रयोजकत्वात् । क्वचिच्चिरोपलम्भस्य तदेकविषयत्वसम्भवे सन्तानविषयाकल्पनात् । न च सन्तन्यमानहेतुसामर्थ्यविशेषादन्यान्योत्पादनियमः, तद्धेतोरनिष्टादिज्ञानस्याप्येकत्वोपपत्तेः। अनेकत्वेऽपि वोदितेनैव सजातीयोदयप्रतिबन्धात् । न खल्वन्यान्यदण्डचक्रादिसमवधानेऽप्यन्यान्यघटसन्तानस्तस्यामेव मृद्युपजायते तद्वत् । अत एवाक्षणिकत्वे दुःखादेः समुदायानुभवापत्तिरपास्ता । मृदीवैकस्मिन्नहङ्कारेऽपि प्रत्यक्षानेकपरिणामायौगपद्यस्योपलब्धिव्यवस्थाप्यत्वात् । अपिचान्ततो भ्रमस्यैव भावस्य तत्त्वज्ञाननिवर्त्यत्वादनैकान्त्यम् । दोषनिवृत्त्यैव तन्निवृत्तिः तत्त्वज्ञानं तु विषयव्यवहारहेतुरेवेति वदन् सकलतीर्थकरलौकिकबहिष्कृतः कृतबुद्धिभिरुपेक्षणीयः ॥

---

## सुखदुःखादेर्ज्ञानत्वयोगः ।

यत्तु— ज्ञानविशेषा एव दुःखादयः स्वयं नश्यन्तीति । तदिदं सौगतरहस्यं तद्विनेयेन तान्त्रिकच्छद्मना श(कित ? क्य)मवगन्तुं, न तु वैदिकैरस्माभिः । 'कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' । इतिशब्दः प्रभृत्यर्थोऽन्यानपि सुखदुःखादिपरिणामानुपादत्त इति पृथगेव ज्ञानपरिणामाम्नानात् । निर्विषयतया सुखादेर्ज्ञानजातीयत्वायोगाच्च । किन्तु न ते घटादिवदुत्पद्यानुभूयन्ते

> "वियद्वस्तुस्वभावानुसारादेव न कारकात् ।
> वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवं दृशा धियाम् ॥"

इति वार्त्तिकोक्तनीत्या संविदविविक्तोत्पत्तिकतयोत्पत्त्यैव प्रकाशाव्यभिचारित्वात् । अत एव परस्य तत्र ज्ञानात्मत्वविभ्रमः । अपिच ज्ञानत्वेऽपि दुःखादेः किं तेनैव स्वयं नाशोऽनुमीयेते, किं वा तदनुमितेन क्षणिकत्वेन । आद्ये न तावत्सम्प्रतिपन्नैर्मन्वय्युदाहरणम् । अस्माकमागमिकज्ञानस्यापि नित्यस्वरूपावभासेनाज्ञाननाशेन वा नाश्यत्वोपगमात् । नापि व्यतिरेकि, यन्नश्यति न तत् स्वत इति व्याप्त्या परनाश्यतासिद्धेर्ज्ञान एव व्याप्तिभङ्गात् । न द्वितीयः, फलादिनाश्ये क्रियादौ व्यभिचारात् । अत एव ज्ञानत्वेन

---

१. 'चो', २. 'श', ३. 'येत, किं', ४. 'मन्वाद्यु' ख. पाठः.

साक्षाज्ज्ञाननिवर्त्यत्वाभावो भावत्वेन साध्यते । भ्रममूलस्यापि दुःखादेर्भ्रमनिवृत्तिद्वारा तन्निवर्त्यत्वान्नानैकान्त्यमिति निरस्तम् । भ्रम एव तन्निवर्त्ये व्यभिचाराद्, अज्ञाननिवृत्तिद्वारोपगमे च बाधात्, प्रतियोग्यप्रसिद्धौ साध्याप्रसिद्धेः, क्वापि तत्प्रसिद्धौ च तत्रैव व्यभिचाराच्च ।

तस्मात्

ईदृक्तन्त्रजडकुष्टत्वादन्तपरिदेवितम् ।
अनर्थकमसम्बद्धं जिह्नेम्यप्यनुभाषितुम् ॥
उत्पत्त्युपहतार्थानि विरोधीनि परस्परम् ।
तान्त्रिकस्यानुमानानि मन्दधीरपि निन्दति ॥

इति सिद्धं प्राचामज्ञानानुमानम् ॥

---

## भावरूपाज्ञानानुमानान्तराणि ।

अथ वा घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानं स्वप्रागभावातिरिक्तघटं न जानामीत्यनुभवविषयभावानिवर्त्तकं, घटापरोक्षप्रमाणज्ञानत्वात्, स्वसामग्रीकालीनाज्ञानावच्छेदानुभवयोग्यघटविषयैकप्रत्यक्षत्वाद्, घटध्वंसजनकतादृशप्रत्यक्षवत् । घटं न जानामीत्यनुभवो वा ज्ञानातिरिक्तघटविषयिविषयः घटं जानामीत्यनुभवान्यत्वे सति घटविषयिविषयत्वाद्, घटेच्छानुभववत् । परस्यापि प्रतियोगितया घटविषयिज्ञानस्य तदनुभवविषयत्वान्नासिद्धिः । अनधिगतो घटो वा प्राथमिकानन्यद्वारकस्वप्रमानिवर्त्यभावविषयः प्रमाविषयत्वात्, संशयितादिवत् । इत्यादिकमपि भावरूपज्ञाननिवर्त्यसविषयाज्ञानानुमानमूहनीयम् तथा च तादृशमेव ब्रह्म न जानामीत्यज्ञानमुन्नेयमिति ॥

---

## अज्ञानभेदाभेदचिन्ता ।

नन्वेवं घटज्ञानेनैवाज्ञाननिवृत्तौ ब्रह्मणि विषयान्तरे वा नाज्ञानमनुभूयेत । तत्तज्ज्ञानसंस्कारविलये च पुनस्तत्तदज्ञानानुभवविरोधश्च । प्रतिविषयमनन्ताज्ञानभेदा वा कल्प्येरन् । कः पुनरतो दोषः । उदितेऽपि प्रमाणज्ञाने विषयो नावभासेत । आवृतत्वात् । न हीदानीमिदमेव तद्विषयं नान्यदिति नियमहेतुरस्ति, घटं न जानामीति सविषयत्वानुभवसाधारण्यात् ।

---

१. 'यप्र', २. 'र्क' ख. पाठः.

अन्यथा यदेव निराश्रयं तदज्ञातानादिसत्तया सत्यमापद्येत। अथ कदाचित् तदावारकत्वलक्षणसविषयत्वोत्पत्तौ दृश्यत्वादसत्यं स्यादित्युच्येत, एवमेकस्यैवाज्ञानस्योदयापायधर्माण्यनन्तावरणान्येव कल्प्यन्तां, कल्पनालाघवात्। नैवमपि युक्तं, ज्ञानेनाज्ञाननाशानुभवनिरोधाद्, भावानां कार्यशक्तेः सहजत्वाच्च। अज्ञानस्य पुनरावरणशक्तिर्ब्रह्मणि सहजेति परत्रापि तथैव भवितुमर्हति। अथाज्ञानस्यांशभेदा एव कल्प्येरन्, ते वेदनादयः। अवस्थाज्ञानपक्षपातादुक्तो दोषः। अथोदयाप्ययधर्मकाः, अज्ञानान्येव न स्युः। अनादिभावत्वे सति साक्षाज्ज्ञाननिवर्त्यमज्ञानमिति हि प्राञ्चः। प्रतिबुद्धस्य सौषुप्तसकलविषयाज्ञानावमर्शश्च विरुध्येत। अपिच प्रमाणज्ञाने सत्यज्ञानांशभेदस्तत्र विषये किमिति नोपजायते। ज्ञानेन प्रतिबन्धादिति चेद्, एवं तर्हि तस्यैवैकस्यानादेरज्ञानस्यास्तु तद्विषये प्रतिबन्धः, यतो नास्ति न प्रकाशत इति व्यवहाराक्षमतापत्तिः। एतेनावस्थाज्ञानभेदेषु स्वभावादेव किञ्चिदज्ञानं तज्ज्ञानेन नश्यति अन्यान्यभिभूयन्त इति कल्प्यते। ज्ञानप्रागवस्थाज्ञानवादेऽपि हीदं तुल्यम्। उत्तरज्ञानप्रागवस्थारूपाज्ञानभावेऽपि नास्ति न प्रकाशत इत्यव्यवहारादिति प्रत्युक्तम्। एकस्यैव मूलाज्ञानस्याभिभवकल्पनालाघवात्। नैवमपि युक्तं ज्ञानादज्ञाननिवृत्त्यनुभवविरोधाद् ब्रह्मज्ञानेनापि तदभिभवमात्रप्रसङ्गाच्चेति।

उच्यते — ब्रह्मणि विषयेषु चाज्ञानानि भिद्यन्ते। तत्र प्रतिविषयमवस्थाज्ञानभेदेषु स्वभावादेव किञ्चित् कदाचिदावृणोतीति कल्प्यते। तद्विषय एव च घटं न जानामीत्यनुभवः। अन्यानि च निर्विषयाण्यपि सुप्ताविव स्वरूपेण तदेकानुभवान्युपगम्यन्ते इति प्रतीतैकसत्ताकतया प्रातीतिकत्वाविघातात्। एवं सति घटज्ञानेन तदज्ञाननिवृत्त्यनुभवसामञ्जस्यात्। ब्रह्माज्ञानस्यैकस्यैव प्रतिविषयमुत्पादविनाशवदावरणभेदपक्षे चौपाधिको विशिष्टाज्ञाननिवृत्त्यनुभवो न विरुध्यते। न चैवं ब्रह्मज्ञानेनापि तदावरणमात्रनिवृत्तावनुगतमज्ञानमवतिष्ठेतेति प्रधानवादिपक्षपातापात इति वाच्यम्। निवृत्तावरणस्य स्वमहिमप्रतिष्ठावभासतया ब्रह्मणस्तदसाक्षित्वेन तत्सत्त्वे प्रमाणाभावाद्, आत्मावरणैकजीवनतया अज्ञानस्य तन्निवृत्तौ सत्त्वानुपपत्तेश्च। यद्वा अनादिष्वेवावरणभेदेषु स्वभावादेव किञ्चिदेकमेकेन ज्ञानेन नश्यति अन्यान्यभिभूयन्त इति कल्प्यते।

वस्तुतस्तु सर्वानुगतसत्तासंविदात्मावरणमेव तत्तद्विषयपरिच्छेदेन घटो नास्ति न प्रकाशते पटो वा घटं न जानामि पटं वेत्याद्यनुभूयमानं तत्तदाका

रवृत्त्या वा साक्षाद् वा प्रमातृसंवित्सम्भेदे सत्यभिभूयते । ज्ञानप्रागवस्थारूपभेदेन चाज्ञानस्य ज्ञानप्रतियोगिकनाशानुभवः, सति स्वोपाधावुपलब्धानुपलब्ध्यैव वा घटादेरपि तथैव नाशानुभवात् । तदभावे च तदेवावरणमात्रब्रह्मसाक्षात्काराददनुभूयते । तत्साक्षात्कारेण च स्वविषयतत्त्वावभासविरोधितया निवर्त्यते बाध्यते वा, सर्वत्रैवारोप्यस्य विषयसत्त्वावभासबाध्यत्वात् । अत्र मते स्वनिवर्त्यत्वं स्वस्मिन् सति स्वविषयावच्छेदावभासानर्हत्वं विवक्षितम् । तत्प्रयोजकत्वं च निवर्तकत्वमिति नानुमानेषु तद्घटितसाध्यबाध इति ।

तस्मान्निर्व्यूढपक्षादिपरिष्कारैरदूषणैः ।
भावावरणमज्ञानमनुमानैः प्रसिध्यति ॥

---

## अविद्यायां श्रुतिः । अनृतशब्दार्थः ।

आगमैरपि । 'सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इत्यादिभिरनिर्वचनीयावरणावगमात् । सत्यानृतशब्दयोः प्रतिद्वन्द्विविषयत्वप्रसिद्धेः । 'सत्यं चानृतं च', 'न येषु जिह्ममनृतं न माया च', 'नानृतं वदेदि'त्यादिषु मृषार्थविषयत्वे सम्प्रतिपन्नम् । मृषा चार्थः प्रत्येयत्वे सति बाध्योऽनिर्वचनीय एव । यद्यपि चानृतशब्दो विवक्षितावयवार्थः, तथापि 'ऋत परं ब्रह्म', 'तदेवर्तं तदुसत्यमाहुः', 'ऋतं वदिष्यामि सत्यं वदिष्यामि' इत्यादिषु ऋतसत्यशब्दयोर्यथाभूतवस्तुविषयत्वे सत्यृतादबाध्यादात्मनोऽन्यदनृतं बाध्यमज्ञानमिति युक्तम् । यत्तु 'ऋतं पिबन्तावि'त्यत्र 'सुकृतस्य लोके' इति वाक्यशेषादृतशब्दात् पुण्यादन्यदनृतं पापमुच्यत इति, तत् त्वयैव कर्मण्यृतशब्दस्याशक्तिर्दर्शिता । न च ऋतशब्दं वस्तु च कर्मेत्युभयप्राप्तावन्यतरनियमाय वाक्यशेषः, न तु कर्मणो लाक्षणिकत्वायेति वाच्यम् । प्रागत ऋतशब्दस्य कर्मण्यव्युत्पत्तेरनियमाप्रसङ्गात् । न चात एव तत्र व्युत्पत्तिः शक्त्यास्थाना मा भूद् घोषो गङ्गायामित्यत एव तीरेऽपि शक्तिः । यथार्थवदवश्यम्भावितोपाधिना कर्मणो भाक्तत्वसम्भवे सत्यन्याय्यानेकशक्तिकल्पनायोगाच्च । 'यथा वृक्षस्य सम्पुष्पितस्ये'त्यादावपि पुण्यप्रतिपक्षतयानृतोपादानं पापविषयमपि न मृषार्थतामतिवर्तते । 'नानृतात् पातकं परमि'ति स्मरणात् । मृषार्थवचनमपि तदर्थावच्छिन्नमनृतमुच्यतेऽज्ञानं मिथ्येतिवत् । त-

स्माद् 'अनृतेन हि प्रत्यूढाः' इति न पापापिधानमभिधीयते, असङ्गात्मनि पापसम्बन्धस्यापि प्रत्यक्षभूताविद्यामूलत्वे सम्भवत्यन्धपरम्परायमाणानादित्वकल्पनायोगात्, 'अविद्यासञ्चितं कर्मे'ति स्मरणाच्च। संस्कारमात्रतया च कर्मणः स्वयम्प्रकाशात्मतत्त्वावभासमात्ररूपलाभप्रत्यूहत्वासम्भवाच्च।

अपिच

बहुत्वे सति पापानामनृतेनेति ते कथम्।
राश्येकत्वविवक्षायां प्रकृतौ लक्षणा भवेत्॥
अनवस्थितरूपाणामनेकेषां च पाप्मनाम्।
स्यादावरणहेतुत्वे कल्पनागौरवं तव॥

न च 'तस्यान्तरायो मैत्रेय!' इत्यादौ ब्रह्मप्राप्तिविरोधिकर्मेत्युच्यते। किं तर्हि।

वासुदेवे मनो यस्य जपहोमार्चनादिषु

तस्येश्वरप्रणिधानपरस्याकामितासिद्धयः सङ्गस्मयहेतवोऽन्तराया भवन्तीति। अथवा महाफलपरीप्सोरवर्जनीयतयान्तरापतन्तो देवेन्द्रत्वादयोऽल्पफलभूता अन्तराया उच्यन्त इति।

यत्तु— मुक्तप्राप्यपितृलोकादिकामानामनृतमपिधानमाम्नायते 'त इमे सत्याः कामा अनृतापिधानाः' इति। न च तत्रावरणमज्ञानमनृतमिति युक्तं, तव कामानामविद्यामूलत्वोपगमात्। तदवश्यम्भावितयारब्धदेहाद्युपभोग क्रतं तन्निवर्त्यं फलापवर्गितया तदारम्भकं कर्मैवानृतमिति परत्रापि तदेवावरणमुच्यतामिति। तत्र स्यादपि सगुणविद्याप्राप्यकामानामारब्धभोगावसानाभिव्यक्तिकतया तन्निवर्त्यं कर्मैवानृतमपिधानमिति, न तु स्वतस्सिद्धात्मस्वरूपसम्पत्ताविति युक्तम्। वस्तुतस्त्वारब्धदेहेन्द्रियविषयादिष्वहं ममेदमित्यविद्यैव[1] तेषामप्यनृतमपिधानमस्तु। निरूढोपास्यब्रह्मात्माभिमानस्यापि[2] भोगानुकूलमात्राविद्यावासनाया[3] यावद्देहपातमनुवृत्तेः, 'तस्य तावदेव चिरमि'त्यादिलिङ्गात्। अन्यथैहलौकिकभोगानुपपत्तेश्च। एवं सति नानृतशब्दस्यान्याय्यमनेकार्थत्वं सर्वत्रैव मृषैकार्थत्वादिति।

नन्वेवमपि कथमनृतमित्यज्ञानं गृह्येत, तत्र तदप्रसिद्धेः। न चानृतमनिर्वचनीयम्। तच्च स्वतस्सिद्धात्मलाभप्रत्यूहत्वसमभिव्यवहारात् तदावर-

---

१. 'द्यैव', २. 'ह्माभि', ३. 'त्र' ख. पाठः.

णात्मकं किमपि सिध्यद् योग्यत्वादविद्याज्ञानमेव पर्यवस्यतीति वाच्यम् । अनिर्वाच्यस्यैवाप्रसिद्ध्या तत्र तदव्युत्पत्तेरिति ।

नैवम् । उक्ता तावदनिर्वचनीयवस्तुसिद्धिः, निर्विषयभ्रमायोगात् । संविदः प्रकाशः पुरुषस्य चैतन्यं सालभञ्जिकाया देह इत्यादिशब्दान्निर्विषयज्ञानमुत्पद्यत इति चेत् । काममुत्पद्यतां, स तु न प्रमाणारोही विशेषाभावात् । न विपर्ययारोही , व्यवहाराविसंवादात् । किं तर्हि । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति हि साङ्ख्याः । स खल्वेष शब्दज्ञानमाहात्म्यनिबन्धनो यश्चैत्रस्य गौरिति व्यवहारः, तथा रूपावभास इव भवति केवलमिति । वस्तुतस्तु जन्यज्ञानमात्रं न निर्विषयमिति युक्तम् । संविदः प्रकाश इत्यादौ हि शाब्दसम्बन्धधीहेतुतया कल्पितो भेदो यद्यनाहार्यात्मा, तन्निबन्धना सम्बन्धधीरपि न मिथ्याविषयत्वमतिसन्धत्ते । संविदः प्रकाशमात्रत्वावगमे सम्बन्धभ्रमबाधस्यानुभविकत्वाच्च नाविसंवादः । यदि पुनराहार्यात्मा, तदा विषयाभावनिश्चयेऽप्याहार्यभ्रमस्य सनिबन्धनतया आदर्शादौ मुखभेदभ्रमस्येव मिथ्याविषयत्वोपपत्तिः

"स्वभावाद् विनिवृत्तोऽर्थो निस्स्वभावः खपुष्पवत्"

इत्यादौ च स्वसमवायारोपविशिष्टोपस्थितं पुष्पं निरवधिकत्वारोपविशिष्टोपस्थितनिषेधप्रतियोग्यारोप्य सम्प्रतिपद्यते लोकः । स च विषयो विमर्शे सति विधिनिषेधप्रत्ययानर्हतापत्त्या बाध्यत्वादनिर्वचनीय इति । तथा चायथार्थवादिन्यनृतवादी मिथ्यावादी मृषावादीति प्रसिद्धेः, शब्दे च मिथ्यार्थक(त्वा? त्व)व्यतिरिक्तानृतत्वानिरूपणात्, च्युतसंस्कृतिप्रतिपत्तिवन्ध्ययोरर्थप्रमित्यजनकत्वेनानृतत्वव्यवहारस्य शास्त्रे गौणत्वात्, 'आहतन्तु मृषार्थकम्', यथा नात्मास्तीति नास्तिकस्य, 'वितथं त्वनृतं वचः', यथा ब्राह्मलौकिकोऽहमिति दाण्डाजनिकस्य, 'अबद्धं स्यादनर्थकम्', यथा 'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पलल[1]पिण्डमधोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीन' इत्यादि, मत्तस्येत्यमीषामवान्तरभेदेऽपि बाध्यविषयत्वाविशेषात्; बाध्ये च मिथ्यैव रजतमभादनृतमिति लौकिकव्यवहारप्राचुर्यादनिर्वचनीयेऽनृतशब्दव्युत्पत्तिरुपपद्यत इति । तस्मात्

---

१. 'पिण्ड इत्यादि' ख. पाठः.

स्वभूतब्रह्मलोकाप्तिप्रत्यूहत्वविशेषणात् ।
प्रतीयतामिहाज्ञानं योग्यत्वादनृतात्मकम् ॥

'एवंकारं च न तं विदाथ य इदं जजानान्यद् युष्माकमन्तरं भवाति नीहारेण प्रावृता जल्प्या च' इति ब्रह्मस्वरूपानवभासभेदभ्रमबीजावरणविक्षेपशक्तिमन्नीहारशब्दमस्मदभिमताज्ञानमेव न कर्मेति व्याख्यातम् ॥

---

## नासदासीदित्यादिश्रुत्यर्थः ।

'नासदासीदि'त्यादौ यद्यपि सदसतोः स्वतन्त्रनिषेधात् तमस्सामानाधिकरण्याप्रत्ययादनिर्वाच्यत्वं तमसि न सिध्यति। यद्यपि च सत्त्यत्पर्यायतया सदसच्छब्दितचिदचिद्व्यष्टिप्रपञ्चस्य प्रतिसञ्चरः प्रतिपाद्यत इति कथञ्चन शक्यं वक्तुम्। तथापि 'तम आसीत् तमसा गूढमग्रे प्रकेतमि'ति संवरणहेतुत्वेन प्रकृतौ तमश्शब्दः प्रयुज्यमानोऽस्मदभिमताज्ञानमेवोपहरति । अन्यथा तत्र गौणतमश्शब्दादानवैफल्यात् । न खलु तिमिरे लोकसिद्धस्य तस्य प्रकृतावपि वैदिकी शक्तिः कल्प्यते, गौरवात् । अन्यायो ह्यनेकार्थत्वम् । अन्यथा 'अज्ञानतमसाच्छन्नः' इत्यादिस्मृतौ पृथगुपादानवैयर्थ्यात् । तस्य चावारकस्य तमसोऽपेक्षितस्वरूपपरतया 'नासदासीदि'त्यादिव्यवहितमप्यन्वीयते

"यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः"

इति न्यायात्। तस्यैव 'तमसा गूढं', 'तुच्छेनाभ्वापिहितमि'त्यर्थाभेदप्रत्यभिज्ञया आहत्य तुच्छत्वाभिधानाच्च। तद्रूपविवरणं च नासदासीदिति युक्तम्। अपिच 'लोका रजांस्युच्यन्त' इति यास्कोक्तेर्नासीद्रज इत्यादिना भौतिकस्य 'किमावरीवरीति तद्व्यापकस्य भूतस्य कुहे'ति तदधारदेशकालभेदस्य 'कस्य शर्मन् कस्य भोक्तुर्भोगार्थमित्यादिना पृथगेव चिदचित्प्रपञ्चनिषेधेन नासदासीदित्यादेरपि तादर्थ्ये पौनरुक्त्यम् । आदौ सङ्गृहीतस्य प्रपञ्चनमिति च नात्यन्तमर्थवत्त्वम्। न च सदसच्छब्दौ चिदचिद्व्युत्पन्नौ। व्युत्पन्नौ तु तथ्यातथ्ययोरिति द्रागिति तद्रूपनिषेधप्रतिपत्तेः । न च सर्गेऽपि 'सच्च त्यच्चाभवदि'ति चेतनाचेतनविषयं, येनेह 'नासदासीदि'त्यादि तत्प्रलयविषयं निगम्येत। 'यदन्यद् वायोश्चान्तरिक्षाच्चैतत् सद् वायुश्चान्तरिक्षं च त्यमि'ति श्रुत्यन्त-

---

१. 'कृतेति' ख. पाठः.

रैकार्थ्यात् । नचादोर्थाविह सदसच्छब्दौ युक्तौ, भूतभौतिकनिषेधस्य पृथगेव दर्शितत्वात् । अन्यथान्यथाभावेनासच्छब्दार्हत्ववादिनस्तव जीवस्यापि विशिष्टस्य तथाभावादिहैव नो सदासीदिति निषेधोपगमाच्च । सच्छब्दानर्हस्य 'नासदासीदि'त्येव निषेधे 'नो सदासीदि'ति वैयर्थ्याच्च । न चैवमेकान्वये नासदासीन्नो सदासीत् तम आसीदिति पृथगर्थप्रत्ययविरोधः, आर्थक्रमेण तम आसीदित्यतोऽनन्तरमाकाङ्क्षावशेन तत् तमो नासदासीन्नो सदासीदित्यनुषङ्गेण पृथगेवार्थप्रत्ययोपगमात् तदनिर्वचनीयत्वमवगम्यते । यद्येवं 'न सत् तन्नासदुच्यते' इति ब्रह्माप्यनिर्वचनीयमवगम्येत । न खलु न सत् तन्नासदित्यवबोध्यते । किन्तु सत्तामात्रमगोचरं वचसां सदित्यसदिति वा नोच्यत इति । यद्वा, कार्यकारणातीतं विशुद्धं ब्रह्म ज्ञेयमिह विवक्षितमिति व्याख्यातम् । न चैवमनिर्वचनीयत्वं सामयिकमापद्यते, सर्वलये परिशिष्यमाणस्य तमसः सत्यत्वशङ्का मा भूदित्यनिर्वचनीयत्वमात्रपरे सदसत्त्वनिषेधे कालभेदसम्बन्धस्याविवक्षितत्वात् । अन्यार्थसम्पातायातस्य तस्य वस्तुस्वभाववैरूप्यायोगेनानिर्वचनीयत्वविशेषणाव्यवच्छेदकत्वात् । न च तमसो विशेष्यस्यापि स्वरूपेण कालभेदसम्बन्धो विशेषणम्, इदानीमसत्त्वप्रसङ्गात् । किन्तु प्रलीनसर्गावस्थस्वरूपगुणसाम्यावस्थाभेदेनेति प्रलयान्वय्येव तत्र कालभेदसम्बन्धोऽनूद्यते 'तम आसीदि'ति । तत्र कुतस्तत्स्वभावस्यानिर्वचनीयत्वस्य कालभेदसम्बन्धशङ्केति ॥

---

## मायापदवृत्तिनिमित्तम् ।

मायापदवृत्तिनिमित्तं च तत्रान्यत्र वा दुस्सम्भवत्वे सति स्फुटावभासित्वमनिर्वाच्यत्वमेव न विस्मयनीयत्वमिति प्रतिपादितम् । न च 'मायी सृजत' इत्यादौ शब्दवृत्त्या विचित्रानेककार्यकारितया विस्मयनीयत्वं मायापदवृत्तिनिमित्तमिति गम्यते । नाप्यर्थाद्, अनिर्वाच्यत्वेनैवासुरास्त्रादावपि मायापदवृत्त्युपवर्णनेनार्थापत्तिपरिक्षयात् । अन्यथा मृषाभूतेन्द्रजालादिषु मन्त्रौषधादिराश्चर्यरूप इति तत्सम्बन्धान्मायापदप्रयोगो लाक्षणिकः स्यात् । ऐन्द्रजालिके च मायिशब्दो मायामयगजादिसम्बन्धादेवोपपद्यते । अत एव 'इन्द्रो मायाभि'रित्यादौ बहुरूपहेतुतावचनेन विचित्रानेकशक्त्यभिधायित्वमवगम्यत इति व्याख्यातम् ।

---

१. 'क' ख. पाठः.

ततो विचित्रानेकशक्त्यवगमेऽपि मायापदस्य तदभिधायित्वानवगमात्। मृषाबहुरूपोऽपि भूरि त्वष्टेह राजतीत्युच्यते। मिथ्याभूतस्यापि स्फुटावभासितया दीप्तिगुणयोगात्। एवमन्यत्रापि सर्वत्र मायाशब्दोऽनिर्वाच्यविषयो व्याख्येयः॥

---

अज्ञाने श्रुत्यन्तराणि।

एवं 'स आशिषा द्रविणमिच्छमानः परमच्छन्दो वर आविवेश' इति कामेन भूतभौतिकप्रपञ्चं सिसृक्षतो ब्रह्मणः परममाच्छादकं श्रूयमाणमावरणविक्षेपशक्तिमदस्मदभिमताज्ञानमेव युक्तम्। त्वदभिमतप्रकृतेः परमात्मानं प्रत्यावारकत्वानुपगमाद्, जीवं प्रति च कर्मण एव तथात्वोपगमात्। सृष्टिप्रवेशानुपयोगिनः प्रकृतेऽनभिधेयत्वाच्च। तव जीवं प्रत्यनावृतस्य तत्साक्षात्कृतस्यापि ब्रह्मणः स्रष्ट्रादेर्वानुपगमात्।

तथा 'अनीशया शोचति मुह्यमानः' इत्यस्मदभिमताविद्योच्यते। नेष्टेऽनयायमिति वा आत्मपारतन्त्र्यान्नेष्ट इति वा तत्रानीशापदवृत्त्युपपत्तेः। 'अविद्यायामन्तरे वर्तमानाः', 'नान्यच्छ्रेयो वेदयन्ते प्रमूढाः', 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति', 'त्वन्मायामूढमनसः' इत्याद्यनुगतमोहहेतुत्वप्रत्यभिज्ञानात्। मोहस्तु वैचित्र्यं वस्तुतत्त्वानवभासरूपमावरणं विपर्ययो देहेन्द्रियाद्यहम्ममाभिमानश्च,

"माया तवेयमज्ञातपरमार्थातिमोहिनी।
अनात्मन्यात्मविज्ञानं यया मूढोऽधिरोहति॥
अस्वे स्वमिति भावोऽत्र यत् पुंसामुपजायते।
संसारमातुर्मायायास्तवैतन्नाथ! चेष्टितम्॥"

इति स्मरणात्। अविद्यामायाज्ञानादिशब्दाश्चात्मावरणविषया न कर्मवृत्तय इत्यावेदितम्। 'तरत्यविद्यामि'त्यादौ 'क्षीयन्ते चास्य कर्माणी'त्यादौ च वचनभेदेन तादर्थ्याप्रत्यभिज्ञानात्। आविद्यकत्वेन तु कर्मणां क्वचिदविद्याशब्दत्वम् 'अविद्यया मृत्युं तीर्त्वे'त्यादौ। एवमन्यत्रापि यथायथमव्यक्तमक्षरमव्याकृतमाकाशमित्यादिशब्दैरखिलजगद्विक्षेपक्षममस्मत्पक्षीकृतमज्ञानमेवाम्नायत इत्युन्नेयमिति।

तदेवं

शक्त्यानिर्वाच्यरूप्यादावनृतादिपदग्रहात् ।
श्रुतयो मानमज्ञाने मृषावरणवस्तुनि ॥

---

### अज्ञानेऽर्थापत्तिः ।

अर्थापत्तिरपि यद्धि मृषाकार्योपादानं कल्पनीयं तदुपादेयसलक्षणमेव कल्प्यते, दृष्टानुसारित्वात् कल्पनायाः । आगमेन तु ब्रह्मोपादानत्वे जगतो गम्यमाने *न विलक्षणत्वन्याय उपपत्तिमात्रपरः, दृश्यन्ते हि शकृद्देहमक्षिकाद्या विलक्षणा एव वृश्चिकरोमक्रिम्यादियोनयः । कथञ्चन सालक्षण्यं च सत्तया जगतोऽपीति । अथवा विवर्तोपादानं न सालक्षण्यमपेक्षते, दृश्यन्ते हि मरीचिकाचालोकादिषु जलतिमिराद्यारोपाः । अन्तरिक्षेऽपि यक्षाद्यारोपाश्च । विवर्ताधिष्ठानस्य च नियतपूर्वभावित्वे सति कार्यानुगतप्रत्ययत्वादुपादानत्वं परिणामिनो न विशिष्यते । ब्रह्म च विश्वविवर्ताधिष्ठानतयोपादानमिष्यत इति । कार्यसालक्षण्यं तु परिणाम्युपादानस्य विशेषः । न खलु घटादयः कनकस्योपादेया रुचकादयो वा मृदः । किं कारणं, वैलक्षण्यात् । यद्यपि सतः पुरुषात् केशलोमानि मक्षिकादेर्वा क्रिम्यादीनि च विलक्षणान्येव जायन्ते, तथापि तत्र निमित्तनैमित्तिकतैव, पृथग् वृत्तिदर्शनात् । सिरोद्भेदा एव केशलोमानीति चागमिकाः । अथवा तानि शरीराद्युपादेयान्येव स्युः, न तु साक्षात् । अन्त्यस्य द्रव्यानुपा(दा)नत्वात् पृथग्वृत्तेश्च । किन्तु तादृशेनैव तदनुगतेन विभक्तावयवभेदेन । तदेवं मृषाकार्यानुपपत्त्या कल्प्यमानमुपादानं यावत्सम्भवं सालक्षण्यानुगमेन मृषात्मकमेव कल्प्यते । तस्य च कार्यत्वेऽनवस्थानाल्लाघवादनादित्वे (यदनादित्वे?) यदनादिमिथ्योपादानं मिथ्या च तदज्ञानमिति ।

अत एव प्रातीतिकाज्ञानस्य व्यावहारिकवियदाद्युपादानत्वोपगमादुपादानोपादेयसालक्षण्यव्यभिचारो निरस्तः । यावत्सम्भवं सालक्षण्यानुसरणाद्, लाक्षणिकप्रातीतिकत्वादेरुपादानादिभावेऽनपेक्ष्यत्वाच्च । अपिच दृश्यत्वादिना जगन्मिथ्यात्वमुक्तम् । तत्र चाधिष्ठानस्य ब्रह्मणो दोषानुगतस्यैवोपा-

---

१. 'ह्म वि' ख. पाठः

---

* 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' (ब्र० २. १. ४)

दानत्वे दोषान्तरानिरूपणादज्ञानमेव दोष इति तदन्यथानुपपत्त्यापि तत्सिद्धिः। न हि ब्रह्म स्वरूपेण परिणामीति परस्यापि सम्प्रतिपन्नं, विकारनिषेधस्य विविक्तविषयत्वोपगमात्। न च स्वशरीरभूततमसो जगत्परिणामितया ब्रह्मण उपादानत्वम्, आत्मनः स्वशरीरपरिणामकेशलोमाद्यनुपादानत्वाद् बाल्यादेरिव शरीरधर्मस्योपादानत्वादेरपि तत्रैव व्यवस्थया तव शारीरसंक्रमानुपगमाच्च। अन्यथात्मनो हेयसम्बन्धप्रसङ्गात्। न च दौवारिकमुपादानत्वं ब्रह्मणः, 'तदात्मानँ स्वयमकुरुत'[1]त्यादिविरोधात्। न ह्यात्मशब्द उपाधिसंसृष्टपरः, लक्षणाप्रसङ्गादिति हि स्वयमेवोक्तमन्यत्र। तथाच श्रुतिन्यायाविरोधाय यतो जगद्विवर्तानुगमेन तदुपादानं ब्रह्म, तदेव तमोऽविद्याज्ञानमुच्यते। तथाच अनुगीतासु

"अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम्"

इति॥

---

**न किञ्चिदवेदिषमिति प्रत्यवमर्शस्याज्ञानविषयत्वम्।**

एवं न किञ्चिदवेदिषमिति प्रतिबुद्धप्रत्यवमर्शान्यथानुपपत्तिः। न चेयं ज्ञानाभावानुमितिः, लिङ्गाभावात्। सुप्तिर्हि सकलविशेषविज्ञानोपरम एव। तेनैव तदनुमाने साध्याविशेषाद्, बहिरन्तःकरणमात्रोपरमस्यापि तदा दुरधिगमत्वात्, स्वयम्प्रकाशतया ज्ञानानां तदानीमननुभवोऽपि तदभाव एवेति तेनैव तदनुमानायोगात्, तस्येदानीमशक्यज्ञानत्वाच्च। तत्र हि स्मर्तव्यास्मरणमलिङ्गं, संस्कारनाशादिनान्यथासिद्धेः। विषयान्तरव्यासङ्गतीव्रदुःखादिसंस्का[2]रैतिरस्कारहेतूनामानन्त्येन सुप्तिदशातदभावविशिष्टास्मरणस्य दुर्ग्रहत्वात्। अपिच नान्यास्मरणमन्याननुभवे लिङ्गमतिप्रसङ्गात्। तदस्मरणं च प्रतियोगिसिद्ध्यसिद्धिव्याहतग्रहम्। अपिच न विशेषविज्ञानानामेकोऽनुभवः समस्ति, विषयभेदसम्बन्धभिन्नस्वानुभवत्वात्। तथाच तदभावहेतोरस्मरणस्याप्यानन्त्ये सति न पुरुषायुषेणापि न किञ्चिदवेदिषमिति स्यात्। अपिच इदानीमात्मनि विशेषविज्ञाने सति कथं तदभावोऽनुमीयेत। तत्कालावच्छिन्न इति चेत्, कोऽसौ तत्कालो नाम। न हि सुप्तिमविज्ञाय सुप्तिकाल आत्मेति शक्यं पक्षयितुम्।

---

१. 'ति स्व', २. 'रहे' ख. पाठः.

जागरस्वप्नान्यकाल इति चेत् । स कथमात्मनि यावद्विशेषविज्ञानाभावमप्रतीत्य परिच्छिद्येत, अवच्छेदकान्तरापरिचयात् । अत एव तत्कालविशेषपक्षीकारोऽपि निरस्तः । अपिचानुभवकालेऽपि तस्यास्मरणादभावः प्रसज्येत । विशेषविज्ञानस्यानुभवादिदानीमस्मरणस्य लिङ्गस्य तदननुभवकालत्वविशेषणे चासिद्धिः । तदनुभवान्यकालावच्छिन्नतदस्मरणमिति चेत्, तदभावकालावच्छिन्नतदस्मरणमिति पर्यवसितोऽर्थः । अशक्यं तु तज्ज्ञानम्, अन्यथा किमनुमेयमवशिष्येत । एतेन कालविशेषे विज्ञानसामग्रीविरहात् तदभावानुमानं[1] प्रत्युक्तम्, अज्ञानासिद्धेः । ननु चत्वरमात्रोपलब्ध्या प्रतिसंहितयेदानीं प्रातर्गजाभाव इव सुप्तावात्ममात्रोपलब्ध्येदानीं विशेषविज्ञानाभावोऽनुमीयत इति चेत् । तत्र मात्रचानुमेयाभावप्रतियोगिव्यावृत्तौ यदि ज्ञानाभावविशिष्टात्मोपलब्ध्येत्युच्येत, तदसिद्धिः, सुप्तिविरोधात् । अन्यथानुमेयाभावाच्च । अथ ज्ञानानुपलम्भमात्मोपलब्ध्येति, न । उपलब्ध्यैकदेशपरिमोषेणापि तत्प्रातिसन्धानसम्भवेनाप्रयोजकत्वात् । न च प्रत्यक्त्वानुकूलत्वादिरात्मधर्मो विषयविज्ञानविरोधी, येन तद्वत्तोपलब्ध्यानुसंहितया ज्ञानाभावोऽनुमीयेत । अनयैव दिशा निदर्शनमपि दर्शयितव्यम् । यद्येवं तव चत्वरे कथं प्रातर्गजाभावज्ञानं, तदा तदज्ञानोपलब्ध्या लिङ्गेनेति गृहाण । तथाच तदन्यथानुपपत्तिरपि तत्र मानामिति ।

न च स्मृतिरप्ययं परामर्शो विषयविज्ञानाभावस्यैव प्रतियोगिज्ञानाभावे सुप्तौ तदनुभवायोगात् । तद्भावे वा सुप्तिव्याघातात् । न च सुप्तावत्यन्तसङ्कुचितमात्मधर्मो ज्ञानं तव स्वयमवभासते, येनेदानीमवमृश्यमानं तदेव प्रतियोग्यपेक्षया ज्ञानाभावोऽवमृश्येत । तत्र चाभ्युपगमविरोधः । न च चिदात्मैव, तस्य विषयविज्ञानेन सहानुभूयमानस्य तदसहभूताभावरूपत्वप्रतिसन्धानायोग्यत्वात् । भावान्तराभावमते च मम गजाज्ञानदशावच्छेदेन चत्वरमनुसन्धीयमानं गजापेक्षया तदभावोऽनुसन्धीयेत । न च तवैवमात्मा, प्रातिभाज्ञानानुपगमात् । तस्मात् सुप्तावनुभूताज्ञानस्मृतिरेवायं न किञ्चिदवेदिषमिति प्रत्यवमर्शः । नित्ययैवात्मसंविदा तदा सविषयाज्ञानभाने तत एव ज्ञानविरोधित्वावभासेऽपि विषयविज्ञानमात्राभावरूपसुप्त्यविरोधात् । सुप्तौ

---

1. 'दनुभा' ख. पाठः.

भावमात्रानुभूतं वाज्ञानमनुसन्धीयमानं तदवधिपूर्वकालत्वेन तत्कालसम्बुद्ध-विषयावच्छेदेन ज्ञानविरोधित्वेन चानुसन्धीयते । न खल्वज्ञानमित्यसदितिवत् प्रतियोगिनिरूप्यविकल्प एव, येन भावमात्रेण न निरूप्येत । विषयविज्ञानापेक्षया तन्निरूपणे च सुप्तिर्विरुध्येत, भावरूपं हि तदुपगम्यते ॥

---

**संस्कारोपपादनम् ।**

न चैवमपि निर्विकल्पादज्ञानसंस्कारानुपपत्तिः, सत्याश्रये सविषयाज्ञानस्यैव लाघवेन संस्कारहेतुत्वात् । प्रबोधारम्भे च विषयभूताज्ञानस्य बुद्ध्यादिसंस्कारमात्रशेषावस्थया सह तदुपसृष्टानुभवविलयेन संस्कारोपजनसम्भवात् । अत एव न प्रातीतिकमात्रेऽज्ञानवृत्तिरेषितव्या, विषयोपसृष्टानुभवनाशादेव संस्कारसम्भवात् । अथवा

ज्ञानमात्रं हि संस्कारमाधत्ते विषये स्वके ।
तस्य नाशो विरुद्धत्वादनिबन्धनमत्र नः ॥
नाशस्तु वस्तुसंस्कारो न ज्ञानत्वमपेक्षते ।
विषयस्मृतिहेतुश्च नासौ घटविनाशवत् ॥

अन्ये तु — तद्विषयाज्ञानवृत्त्युपहितचैतन्यविनाशादज्ञानादिसंस्कार इत्याहुः । अथैवमिदमिति च रजतमिति चान्तःकरणाज्ञानवृत्तिभेदोपधेयज्ञानभेदादख्यातिरापद्येत । न । इदंवृत्त्युपधेयमेव हि चैतन्यमारोप्यरूप्याकाराज्ञानवृत्त्याप्युपधीयत इति तदस्वातन्त्र्यात् । एवं च सौषुप्तविषयविज्ञानाभावसिद्धिः प्रत्यवमृष्टाज्ञानालिङ्गादेवोपपद्यते । भेदग्रहान्यथानुपपत्त्या च भावाज्ञानसिद्धिरुपपादिता ॥

---

**अज्ञानस्य कल्पकान्तराणि ।**

'तत् त्वमसी'त्याद्यभेदोपदेशश्च स्वरूपाभेदविषयो न विशिष्टाभेदविषय इत्युपपादितम् । स च जीवेशभेदादेराविद्यकत्वमन्तरानुपपन्नः, विरोधान्नैष्फल्याच्चेति तदुपपादकतया 'माययान्यदिवे'त्यादिश्रुत्या 'विभेदजनकेऽज्ञाने' इत्यादिस्मृत्या च भेदस्याविद्यकत्वं कल्पनीयम् । तत्र चाज्ञानसंसारौ जीवस्य, सर्वज्ञ-

त्वादिकं चेश्वरस्येति व्यवस्था चासकृद् दर्शिता। न च वेदतात्पर्यविषयनिर्विशेषात्मोपलक्षणमात्रसर्वज्ञत्वादिमृषात्वमभ्युपगतमेवापाद्यम्। न वा तत्र वेदतात्पर्यवादी नीतिविन्नाम। एवं च स्वयम्प्रकाशचिद्रूपात्ममात्रब्रह्मजिज्ञासाद्युपदेशोऽपि तदुपपादकं तदावरणमज्ञानं कल्पयति, अन्यथा स्वत एवापरोक्षे जिज्ञासाद्ययोगात्। तथा ज्ञानेनैव मोक्षो नोपासनयेति व्यवस्थापितम्। न च बन्धस्यानाविद्यकत्वे ज्ञानैकनिवर्त्यत्वमुपपन्नं, क्वापि तदज्ञानानुपादानस्य तज्ज्ञानमात्रनिवर्त्यत्वादर्शनात्। पापादेश्च नियमाद्यपेक्षया सेतुदर्शनमात्रानिवर्त्यत्वात्। प्रेमापेक्षयैव च प्रियदर्शनस्यापि दुःखनिवृत्तिहेतुत्वात्। ततः सुखोत्पादेन दुःखसन्ततेरेवोच्छेदाद् वा। आत्मदर्शनं च बन्धध्वंसे न किञ्चिदपेक्षते, श्रवणादिनियमादृष्टस्यापि ज्ञानोत्पत्तावेवोपक्षयात्। व्यतिरेकः पुनरनिर्वचनीयसमर्थनेन दृष्ट इति बन्धस्य ज्ञानमात्रनिवर्त्यत्वोपपादनाय मिथ्याज्ञानोपादानत्वं कल्पनीयमिति।

अपिच द्वितन्तुके पटे जाते त्रितन्तुको न भिन्नो जायते। स हि न द्वितन्तुके समवेयात्, तन्तूपादानत्वात्। नापि तन्तुष्वेव, तदैव तत्रैव मूर्तद्वयसमवायविरोधात्। न ह्येकत्र द्वयोः संयोगो दृष्ट इति समवायोऽपि कल्प्यते, अतिप्रसङ्गात्। उत्तरोत्तरतन्त्वाधिक्येन पटभेदे तन्त्रत एकपटत्वव्यवहारविरोधाच्च। नापि तदभिन्नः, अनुपादानोपादेयत्वादौ सत्युदितोद्यदभेदानुपपत्तेः। न च पूर्वनाशेन सह पूर्वतन्तुभिरुत्तरोत्पत्तिः, उत्तरवानक्रियया पूर्वतन्तुसंयोगरूपासमवायिनाशसम्भवादिति वाच्यम्। एवं वदतो न्यायिदेशीयस्याणुषु क्रियया संयोगनाशेन द्व्यणुकादिनाशक्रमेण प्रलयप्रतिपादनं न सङ्गच्छेत। द्व्यणुकेऽणुद्वयसंयोगेन त्र्यणुके वा बह्वणुसंयोगेन कार्यान्तरारम्भसम्भवात्। तथैव महापृथिव्याद्यारम्भे तद्धेतुक्रियया पूर्वपूर्वविनाशेनोत्तरोत्तरकार्योत्पत्तेर्द्व्यणुकाद्यभावात्। अपिचैवं सूक्ष्मदृशां प्रणिहितचेतसां योगिनामपि योग्यत्वे सत्यनुपलभ्यमानस्य त्रितन्तुकाद्युत्पादे द्वितन्तुकादिनाशस्य कल्पने क्षणविनाशवादिनोपालभ्येत। प्रत्यभिज्ञानं तु तन्तुद्वयवानादारभ्य स एवायं क्रमोपचितो महापट इति पीड्येत। न ह्यान्त्यतन्तुसंयोगात् पट एव नोत्पद्यते, द्वितन्तुकप्रभृति पटव्यवहारात्। तस्माद् दुर्निरूपतया अविद्यामयः कल्प्यते। तथा

---

१. 'त्युष', २. 'नास्य' ख. पाठः.

शुक्रशोणितसम्भेदात् प्राणिदेहसमुद्भवः ।
शीर्यतो वटबीजाच्च महावटसमुद्भवः ॥
न निरूपयितुं शक्यो निखिलैरपि पण्डितैः ।
विजातिः पार्थिवो धातुर्नाप्यो वा वटजातिभाक् ॥
वटजातिपरीणामस्तयोरपि कथं भवेत् ।
एवमन्यच्च संसारे चिन्त्यमानमवस्यति ॥
अविद्यायामतः सर्वमविद्यायोनि कल्प्यते ।
'सैषाविद्या जगत् सर्वमि'ति श्रुतिश्चोक्तकल्पनामुपोद्बलयति ॥

---

### अज्ञाने स्मृतिपुराणसम्मतिः ।

**स्मृतयश्च —**

आसीदिदं तमोभूतम्' इत्याद्याः प्रसङ्गादुदाहृताः । तथा वैष्णवेऽपि पुराणे 'ज्योतींषि विष्णुः' इत्यादिना सर्वात्मत्वे प्रतिज्ञाते तदुपपत्तये 'ज्ञानस्वरूपो भगवान्' इत्यादौ भुवनभेदस्य 'विज्ञानविजृम्भितानी'ति विवर्तत्वमुक्त्वा, पुनः 'यदा तु शुद्धं निजरूपि' इत्यादिना ज्ञानबाध्यत्वमभिधाय, 'वस्त्वस्ति किं', 'मही घटत्वमि'ति श्लोकद्वयेन व्यभिचारितया तदेवावस्तुत्वं निर्दिश्य, 'तस्मान्न विज्ञानमृतेऽस्ति किञ्चिद्' इत्यादिना बाधायां सामानाधिकरण्याभिप्राय-मुपसंहृत्य, 'ज्ञानं विशुद्धमि'त्यादिनात्मस्वरूपपरिशेषमनूद्य 'सद्भाव एव-मि'त्यादिना नायमभ्युपगमवादो भूतार्थ एवेत्यनूद्य एतच्च भुवनमसत्यमपि यत् संव्यवहारं प्राप्तं तत्रापि चोक्तं कारणं

'विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाप्युपेतम्'

इत्यत्रेत्यनुस्मार्य पर्यवस्यत्युपदेशसन्दर्भे गर्भितमविद्यामायामूलत्वं जगतोऽव-गतम् । अत्र च वक्तव्यमुक्तं प्रागेवेति ॥

---

### भावरूपाज्ञाने सूत्रकारसम्मतिः।

अपिच सूत्रकारोऽपि 'आह च तन्मात्रम्' (ब्र० ३. २. १६) इति निर्विशेषज्ञानैकरसमात्मानं, तं च प्रत्यगभिन्नम् 'अतोऽनन्तेन तथाहि लिङ्गम्'

---

१. 'ण्यमुप' ख. पाठः.

(३. २. २६) 'अवस्थितेरिति काशकृत्स्नः' (१. ४. २२) 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (४. १. ३) 'अविभागेन दृष्टत्वात्' (४. ४. ४) इति विवक्षित्वा तस्य जिज्ञासां जगत्कारणत्वादिकं च सूत्रयन् बाह्याभ्यन्तरभेदप्रपञ्चमात्रस्याविद्यामयत्वं साक्षादिवोपक्षिपति, अन्यथा तदनुपपत्तेरुक्तत्वात् ॥

---

## तद्गुणसारत्वादितिन्यायविचारः।

तथा 'तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत्' (ब्र० २. ३. २९) इति मुखत एवात्मनो ज्ञातृत्वकर्तृत्वोत्क्रान्तिगत्यागत्यादिव्यपदेशो बुद्धिसत्त्वगुणाध्यासाश्रय इत्यविद्यां सूत्रयति।

अथ कथं बुद्धिगुणसारत्वादित्युच्यते। तच्छब्दो हि प्रकृतपरामर्शी। न च बुद्धिः प्रकृता, 'तस्यापत्यम्' (४. १. ९२) 'तेन रक्तं रागात्' (४. २. १) इत्यादौ चैकविभक्तिविशेषपरत्वाभावेन षष्ठ्यादिसमर्थप्रातिपदिकमात्रलाभाय तत्पदमप्रकृतविषयमपि युक्तम्। न त्वेकव्यक्तिविशेषपरमपि, व्यक्तिवचनानां सहितविशेषपरत्वनियमात्। ज्ञानं तु 'ज्ञोऽत एव' (ब्र० २. ३. १८) इति प्रकृतम्। तेन ज्ञानगुणसारत्वाद् विज्ञानत्वव्यपदेशो 'यो विज्ञाने तिष्ठन्नि'त्यादौ। प्राज्ञवत्। यथा विपश्चितो ब्रह्मणो ज्ञानगुणसारत्वाज्ज्ञानव्यपदेशः 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'स एको ब्रह्मण आनन्दः' इत्यानन्दगुणसारत्वाद् वा तद्व्यपदेशः 'यदेष आकाश आनन्दो न स्यात्', 'आनन्दो ब्रह्मेति व्यजानादि'तीति व्याख्येयं सूत्रमिति।

तन्न। परस्यापि 'भेदादिति चेद् न प्रत्येकमतद्वचनात्' (ब्र० ३. २. १२) इत्यादौ कथञ्चिद् बुद्धिसन्निहितमात्रावमर्शस्वीकाराद्, इहापि बुद्धिसत्त्वस्य 'हृदयमेवान्ववक्रामती'ति 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रः' इत्यादिप्रकृतविषयसन्निधानात्। 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' (ब्र० २. ३. २४) इति हृच्छब्देन प्रकृतत्वाच्च। व्यवहितामवमर्शश्च परस्यापि। उपसर्जनावमर्शस्तु दोषोऽधिकः। सम्प्रतिपन्नश्चायं 'पानव्यापच्च तद्वत्' (जै० ३. ४. १५) 'तथा प्राणाः (ब्र० २. ४. १) तदभावो ना-

डीषु तच्छ्रुतेः—' (ब्र० ३. २. ७) इत्यादौ । अपि चानन्दगुणसारत्वाद् यथा प्राज्ञस्यानन्दव्यपदेश इति दृष्टान्तं व्याचक्षाणेन बुद्धिसन्निहितमात्रावमार्शी तद्वृत्तमुपगतम् । अन्यथा दृष्टान्ते हेतुसाध्यवैरूप्यापत्तेः । न चायं यो यद्गुणसारः स तद्व्यपदेश इति सामान्यतो दृष्टान्तः, गन्धादिगुणसारे कुसुमादौ तदव्यपदेशेन व्यभिचारात् । यत्तु — न बुद्धिगुणसारत्वात् प्राज्ञस्य दहरत्वव्यपदेश इति दृष्टान्तः साधनविकलः, प्रयुक्तहेत्वतिरिक्तौपाधिकत्वमात्रसाम्यं तु क्लिष्टमित्यादि । तन्न । न हि जीवस्य बुद्ध्युपाधिकोऽल्पत्वव्यपदेश इति हेतुना सिसाधयिषितम् । किन्तु तथाव्यपदेशान्यथासिद्धावपेक्षितोपपत्तिमात्रमुच्यते बुद्धिगुणसारत्वादिति, मा भूत् परमात्मनो विभुत्वमिवाश्रुतोपाधिकत्वादाराग्रमात्रत्वादि जीवस्वभाव इति शङ्केति । उपाधिनिर्देशश्च तत्र जीवाणुत्वनिरासे दर्शितः । प्राज्ञस्यापि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' 'एष म आत्मान्तर्हृदयेऽणीयान् व्रीहे'रित्यादिव्यपदेशो हृदयोपाधिकस्तुल्य इत्यत्र दृष्टान्तः प्राज्ञवदिति युक्तम् । न तु हृदयोपाधिकमणुत्वमित्यत्र, येन परस्यातदुपाधित्वेन वैषम्यमाशङ्क्यतेति । परस्य तु यद्यात्मा चिद्रूपः तत एव ज्ञानव्यपदेश इति कृतं ज्ञानगुणसारत्वेन । अथ न, स्वयंज्योतिष्ट्वाद्याम्नायविरोधे इत्यलमतिप्रसङ्गेन ।

अपिच 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र० ४. ४. १) चितितन्मात्रेण तदात्मकत्वात्—' (ब्र० ४. ४. ६) इत्याविर्भूतात्मस्वभावकैवल्यावस्थानं मोक्षं विवक्षित्वा (ब्रह्मजिज्ञासा ?) 'पुरुषार्थोऽतश्शब्दात्—' (ब्र० ३. ४. १) इति ब्रह्मज्ञानस्य मोक्षहेतुत्वं सूत्रयन् मायामयमेव बन्धमभिसन्धत्ते । तथा 'शास्त्रयोनित्वात्' (ब्र० १. २. ३) इति ब्रह्मणः प्रत्यक्प्रकाशसत्तामात्रस्य शास्त्रप्रमाणकतां सूत्रयन् ब्रह्मविषयामविद्यां प्रतिपद्यते । अनधिगताबाधितविषयं हि प्रमाणमिति जैमिनिरसूत्रयत् — 'अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम्' (जै० १. १. ५) इति । न च प्रकाशात्मनो मानवृत्त्यभावोऽनधिगम इत्युक्तम् ॥

---

### आरम्भणाधिकरणविमर्शः ।

तथा 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० २. १. १४) इति कारणात् कार्यस्यानन्यत्वं सूत्रयन्नविद्यामूलतामाकलयति । न हि वस्तुसतः कार्य-

रूपस्यैव कारणानन्यत्वं, कार्यकारणभावविरोधात् । न च कारणस्यैवावस्थान्तरं कार्यमिति तस्य तदनन्यत्वं, ब्रह्मणो विकारापत्तेः ।

उत्तरोत्तरसंस्थानयोगो हि वस्तुनः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थस्य तूत्पत्तिर्मृद इव पिण्डघटकपालाद्यवस्थायोग इति परस्योपगमः । न हि पूर्वावस्थमेवोपादानमुत्तरावस्थायाः, येन निरुपादानमवस्थान्तरमापद्येत । तथाचोत्पादविनाशाभ्यामेव ब्रह्म विक्रियेत मृदादिवत् ।

यत्त्वाह — यथाग्नेयादियागाः पृथगुत्पन्नाश्च पुनस्त्रिकत्रिकतया समुदिताश्च पुनः फलसाधनभावेनैकीकृताश्चोपदिश्यन्ते, तथा चिदचिदीश्वरा विविक्तस्वभावाश्च पुनः शरीरात्मभावेन द्विराशीकृताश्च पुनर्विशिष्टतयैकीकृताश्चोपदिश्यन्ते । तत्र सर्वावस्थचिदचिद्वस्तुशरीरविशिष्ट एव परमात्मा 'सदेव सोम्येदम्', 'आत्मा वा इदं', 'ब्रह्म वा इदं', 'सर्वं खल्विदं ब्रह्मे'त्यादिभिरुच्यते । ततो विशिष्टमेव कार्यकारणावस्थमिति स्वरूपान्यथाभावज्ञानसङ्कोचादिरवस्थाभेदः परमात्मन एव । किन्तु सद्वारकः प्रोक्षणाद्यङ्गमिव यागस्य । तदवस्थचिदचिन्नियमनरूपावस्थाभेदश्चाद्वारकः पुरोडाशाद्यङ्गमिव यागस्य । तथाच कार्यकारणानन्यत्वमविकारित्वं चोपपन्नम् । ब्रह्मणः सद्वारकस्य विकारस्य स्वरूपासम्बन्धादिति ।

तन्न । आग्नेयादीनां हि साधनरूपैकत्ववचनं प्रत्य(क्ष? क्षं) दर्शपूर्णमासाभ्यामिति । सदादिपदानां तु चिदचिद्विशिष्टैकार्थविषयत्वे तावन्न मानं पश्यामः । 'सर्वं ब्रह्मे'त्यादिसामानाधिकरण्यमपि ह्यविशिष्टार्थं व्याख्यातम् । न चायमात्मा सुखीत्यादावपि शरीरविशिष्टाभिधानं, यागादौ स्वर्गान्वयस्यापूर्वेणेवौपादानिकेनैव शरीरित्वेनात्मनि सुखान्वयस्योपपाद्यत्वात् । एवमिह 'बहु स्यामि'ति परिणामान्वयोऽपि ब्रह्मण्याक्षिप्तविद्ययोपपाद्यताम् । अत एव 'अजामेकामि'ति च 'देवात्मशक्तिमि'ति च ब्रह्मकारणतानिर्वाहाय पृथगाम्नायते । अन्यथा 'किं कारणं ब्रह्मे'त्यपि विशिष्टविषये तदनुपपत्त्यभावेन विमर्शासङ्गतेः, 'अजामेकामि'त्यादि पृथगाम्नानवैयर्थ्याच्च । अत्र परोदाहृतः पृषदाज्यनयश्च स्वव्याघातकः । उपभृतो हि पात्रस्य प्रयाजाज्यचतुर्गृहीतावरुद्धस्य पृषदाज्याधारत्वायोगात् पात्रान्तरमाक्षिप्यते । एवं ब्रह्मणोऽप्यविकारित्वावरुद्धत्वाद् विकारयोग्ये परस्मिन्नाक्षिप्ते ब्रह्मण उपादानत्वमेव हीयेतेति ।

अपिच सदादिपदे विशिष्टविषये 'ऐतदात्म्यमिदं सर्वमि'त्यादौ विशिष्टस्यैव जगदात्मत्वं प्रसज्येत। अपिचैवं विशिष्टस्य ब्रह्मणोऽद्वारक एवान्यथाभावादिरिति सद्वारकत्ववचनविरोधः। अपिच अवस्थाभेदसम्बन्ध इव सद्वारको हेयसम्बन्धोऽपि स्यादिति ब्रह्म जीवान्न विशिष्येत। अपिच स्थूलसूक्ष्मावस्थनियाम्यपर्यायेण चाद्वारकनियमनावस्थाभेदपर्यायेऽवश्यम्भाविनि विकारित्वं दुष्परिहरम्। अपिच ब्रह्मणोऽवस्थाभेदपरिणामित्वे कृत्स्नप्रसक्त्यादिदोषः। ब्रह्म जगदुपादानं निरवयवं च ब्रुवाणा श्रुतिरपि ह्युपपादनीया, अन्यथा श्रुतेरेव विरुद्धस्यापि प्रतिपत्तौ मीमांसावैयर्थ्यात्।

न चाचिन्त्यशक्तितया परमात्मनो निरवयवत्वं परिणामित्वं कृत्स्नप्रसक्तिं च प्रतिपत्स्यामहे। यथाह भगवान्—

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥"

इति, श्रूयते च 'परास्य शक्तिर्विविधैव श्रूयते' इतीति वाच्यम्। एवमात्मनो भेदश्चाभेदश्च सगुणत्वं च निर्गुणत्वं च संसारित्वं चासंसारित्वं चेति शक्तिवैचित्र्यादेवोपपन्नमिति सामानाधिकरण्याद्युपपादनक्लेशानर्थक्यात्। यथादर्शनमविरोधेनात्मनि सर्वशक्तिव्यवस्थोपपत्तौ कल्पनान्तरायोगाच्च। यथा हि शुक्त्यधिष्ठाननिष्ठमेव रजतम्। न च तन्निष्ठा शुक्तिः न ह्यन्योन्याध्यास इतीतरेतरमधिष्ठानारोप्यभावविवक्षयोच्यते, पौर्वापर्यविरोधात्। शून्यपरिशेषप्रसङ्गाच्च। किन्तु इदमात्मना रजतसंसृष्टरूपेण शुक्त्यधिष्ठान एवेदं रजतमित्यारोप इति। न च शुक्तिनिष्ठं रजतं, तत्रैव बाध्यत्वात्। एवमिदमुच्यते मत्स्थानि सर्वभूतानीत्यादि। एवं हि दृष्टानुरोधः स्यात्। तस्मात् स्वमहिमप्रतिष्ठ एव परमात्मैश्वरयोगशब्दितप्रकृतिमायाविद्याशक्त्या जगदात्मा विवर्तत इति कार्यस्य तावन्मात्रसत्ताकतया तदनन्यत्वमुच्यत इत्यकामेनापि स्वीकरणीयम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनेन चैतत् प्रतिपादितम्॥

---

## श्रुतेस्तु शब्दमूलत्वादितिन्यायाविरोधः।

न चैवं कृत्स्नप्रसक्त्यादिपरिहाराय 'श्रुतेस्तु शब्दमूलत्वात्' (२. १. २७) इति सूत्रायोगः, मिथ्यात्वादिति हि तदा स्यादिति वाच्यम्। जगदु-

पादानत्वमेवानुपपत्त्या मा स्म हीयेतेति तल्लक्ष्यब्रह्मणः शब्दमूलकतया कथञ्चिदुपपादनीयत्वाभिप्रायोपपत्तेः । तथाचाविद्याविकृतावस्थमपि ब्रह्म स्वभावेन विकारोवर्तीति नोक्तदोष इति सङ्गंस्यते । न चाविद्याश्रयतायामपि ब्रह्मणः कृत्स्नैकदेशविकल्पः, येन स्वापे सत्सम्पत्तिर्न स्यात् । अविद्यात्मनो नित्यसम्पन्नत्वात् । अतो 'ज्यायानि'त्यादि च विरुध्येत, तस्याल्पत्वात् । अविद्याया वर्तमानक्रियावदाश्रयविषयविभागेनैव ह्यनादिवृत्तिरुपगम्यते । सोऽयमविद्यात्मा यद्यपीदानीमपि सता सम्पन्न एव, किन्तु नाविद्यकविभागविक्षेपपरिहारेणेत्यतः 'सता सोम्य! तदा सम्पन्नो भवती'त्युपपन्नमित्यलं प्रसक्तानुप्रसङ्गेन ॥

---

## महतः परमव्यक्तमिति श्रुत्यर्थः ।

तथा 'महतः परमव्यक्तमि'त्यत्र न साङ्ख्यीयं प्रधानमुच्यते । *'शरीररूपकविन्यस्तगृहीते'रित्युक्ते कथं तस्य व्यक्तस्याव्यक्तशब्दतेति शङ्कायां 'सूक्ष्मं तु तदर्हत्वात्' (ब्र०. १. ४. २) इति प्रकृतिद्वारिका सेति सूत्रयित्वा, तर्हि स एवायं प्रधानवाद इति घट्टकुट्यां प्रभातमित्याशङ्क्य तत् त्रिगुणं जगद्बीजं स्वरूपतोऽप्रत्याख्याय 'तदधीनत्वादर्थवत्' (ब्र०. १. ४. ३) इति परमात्माधीनत्वं सूत्रयन्नविद्यारूपमवद्योतयति । सा हि जगद्बीजशक्तितया परतन्त्रा, यैषा श्रूयते 'देवात्मशक्तिं स्वगुणैर्निगूढामि'ति । सा च 'मायां तु प्रकृतिं विद्यादि'त्यनिर्वचनीयवृत्तमायाशब्दिता पराविद्यैव । तदिदमुदितं भाष्ये **'अविद्यात्मिका हि सा'** इति । अपि च तदधीनत्वादिति सत्तास्थितिकार्येषु सर्वशस्तादधीन्यमवगम्यते, विशेषानुपादानात् । तच्चाव्यक्तं भूतसूक्ष्ममयं मायाविद्यानादिरात्मविवर्त इति न विरोत्स्यते । परस्य तु स्वतः सदव्यक्तं परमात्मशरीरतया तदात्मकत्वेन धारणादावेव परतन्त्रं स्यादिति विरुध्येतेति ।

यत्तु पर आह—'महतः परमव्यक्तमि'ति सूक्ष्मशरीरं गृह्यते तदर्हत्वात् । 'शरीरं रथमेव चे'ति तस्यैव रथरूपितत्वोपपत्तेश्च, लोकान्तरप्राप्तेरपि विव-

---

१. 'द्यया वि', २. 'रो', ३. 'रि' ख. पाठः.

---

* (ब्र० १. ४. १)

क्षितत्वात् । कथं पुनरस्यात्मनो महतः परत्वम् । 'तदधीनत्वादर्थवत्' (ब्र० १. ४. ३) प्रवृत्त्यादौ शरीराधीनत्वादिन्द्रियेभ्य इवार्थानामिति । तन्न । उपक्रमे शरीरशब्दस्य स्थूलपरत्वात्, प्रसिद्धेः । 'यच्छेद् वाङ्मनसी प्राज्ञः' इत्यादिना पुमर्थसाधनप्रवृत्तिविशेषप्रतिपादनेन तदुपयोगविवक्षया रथिरथादिरूपकविन्यास इत्यवगमे स्थूलशरीरस्यैव तत्प्रवृत्त्यर्हत्वाच्च, 'मनसस्तु परा बुद्धिरि'त्येव करणसम्पिण्डात्मकबुद्धिप्रधानस्य सूक्ष्मशरीरस्योक्तत्वाच्च । अथापि सूक्ष्मशरीरसम्बन्धेनाव्यक्तमिति स्थूलमुच्यताम् । न, हेतुशब्दस्य तादात्म्येन हेतुमति वृत्तिसन्निकर्षात् । अन्यत्र च कल्प्योपस्थितिकतया विप्रकर्षात् । भाष्यकृतस्तु — प्रक्रमे शरीरशब्दस्य सूक्ष्मवृत्तिमप्युपेत्यानादरेण तद्द्वारापि स्थूलशरीरवृत्तिमव्यक्तपदस्याहुः सर्वथाप्यानुमानिकनिराकरणादिति । तदेवं प्रकृतिविषयेऽव्यक्तशब्दे 'तदधीनत्वादर्थवदि'त्युदितशङ्कानिरासस्यापेक्षितस्य विधानं न्याय्यम् । इन्द्रियादे रथादिवदात्मनः शरीरस्यापि कथञ्चित् परत्वप्रतिपत्तिसम्भवेन तत्प्रतिपादनस्यानपेक्षितत्वादिति ॥

---

### अजामेकामिति मन्त्रार्थः ।

तथा 'अजामेकां लोहितशुक्लकृष्णामि'ति न साङ्ख्चीयं प्रधानं प्रतिपत्तव्यम् । न जायत इत्यजा अजावदजेति वा कल्पनाया अविशेषेण विषयविशेषनिर्णयकारणाभावादित्येवं 'चमसवदविशेषात्' (ब्र० १. ४. ८) इत्युक्त्वा प्रकरणादितः पुनरर्थविशेषनिर्णय इत्यभिप्रेत्य 'ज्योतिरुपक्रमा तु तथा ह्यधीयत एके' (ब्र० १. ४. ९) इति सूत्रयन्नविद्यामेवाजां प्रतिपद्यते । अत्र भाष्यकृता ज्योतिरिति ब्रह्म, 'तं देवा ज्योतिषां ज्योतिः', 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादिश्रुतेः । अथवा ज्योतिरिति तेजो भूतविशेषः, 'खं वायुर्ज्योतिरापः', 'ज्योतिर्वायौ प्रलीयते' इत्यादिप्रसिद्धेः । तदुपक्रमः कारणं प्रमुखं वा यस्याः सा तथेति विवक्षित्वा **'परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या'** इति लोहितशुक्लकृष्णामिति स्वार्थवृत्त्यनुरोधेन व्याख्यातम् — 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य' इति ह्येकेऽधीयते इति । अत्र प्रकृत्यात्मना निर्देशोऽजामेकामिति गौणः । तथा ज्योतिर्ब्रह्म

उपक्रमः प्रधानमस्या इति विवक्षित्वा सौत्रस्यैकेशब्दस्य मुख्यार्थतामजामन्त्रमधीयाना एवेति मत्वा व्याख्यातं — '**देवात्मशक्तिं स्वगुणैर्निगूढामि**'ति **पारमेश्वर्याः शक्तेर्वाक्योपक्रमेऽवगमात्**' इत्यादि, '**प्रकरणात् तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायते**' इति च। कथं पुनरेवमपि सूत्रादनिर्वचनीयाविद्यासिद्धिः। प्रधाने लाक्षणिकोपक्रमग्रहणादेव। ज्योतिरुपक्रमोऽधिष्ठानतया सत्ताप्रदत्वेन कारणमनादेरप्यस्या यथा प्रतिपद्येतेति हि लाक्षणिकोपादानामिति। अत्र च 'अजामेकामि'ति स्वार्थवृत्त्यनुरोधेन 'लोहितशुक्लकृष्णामि'ति कार्यात्मना निर्देशो गौणः। तत्र तावन्न तेजोबन्नेऽजाकृतिरस्ति। नाप्यजातिः, 'तत् तेजोऽसृजते'त्यादिश्रुतेः। अवयववृत्त्या चाजाशब्दस्य प्रकृतिद्वारा तद्वृत्तौ विप्रकर्षः। एवं प्रकृतावजाशब्दस्य रूढिहानिः। 'लोहितशुक्लकृष्णामि'ति च कल्प्योपस्थितिकज्योतिरादिकार्यद्वारा लक्षणीयरञ्जनीयत्वादिसामान्योपस्थाप्यगुणद्वारा वा तद्वृत्तिरिति विप्रकृष्टेति शङ्किते 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' (ब्र० १. ४. १०) इति सूत्रितम्। अतस्य तद्भावसम्पादनं कल्पना, प्रसिद्धेः। रजस्सत्त्वतमोगुणाया आत्मशक्तेरविद्याया एव लोहितशुक्लकृष्णच्छागारूपकल्प्त्यायमुपदेशः 'अजामेकां लोहितशुक्लकृष्णामि'तीति। तथाच तद्रूपकल्पनाताटस्थ्यादप्रहीणा सर्वत्र रूढिरिति। **एतेन** न तेजोबन्नान्येवाजैका, तेषां बहुत्वात्। नापि तद्रूपं ब्रह्म, ताद्रूप्येण बहुत्वानपायात्। स्वरूपेण लोहिताद्यनन्वयात्। नापि तेजोबन्नकारणभूता काचित्। अनभिधेयतेजोबन्नवृत्तिमारोप्याजाशब्दस्य तत्कारणलक्षणाया वरं तदभिधानमित्यादितान्त्रिकजल्पाकविकल्पास्तन्त्रविनेयकुण्डगोलकादिकुतूहलहेतवो निरालम्बनाः।

**यत्तु** — अत्राजाशब्दं यौगिकमाश्रित्य ज्योतिरुपक्रमा ब्रह्मकारणिकाजेह ब्रह्मात्मिका प्रतिपत्तव्या, न स्वतन्त्रेति प्रतिपादिते विरोधमाशङ्क्य 'कल्पनोपदेशादि'ति सूत्र्यते। कल्पना क्लृप्तिः सृष्टिः 'धाता यथापूर्वमकल्पयत्', 'प्राकल्पयद् यो भुवनानि सप्ते'त्यादिदर्शनात्। तथाच 'अस्मान्मायी सृजते विश्वमेतदि'ति सृष्ट्युपदेशात् कारणावस्था प्रकृतिरजा तेजोबन्नकार्यावस्था ज्योतिरुपक्रमेतीत्यविरोध इति। एवं च यौगिकार्थस्यापि स्वारसिकस्यानुपपत्त्य-

---

१ 'स्थ्या प्र', ख. पाठः

भावे प्रयोजनाभावे च अजावदजेति गौणार्थपरिग्रहायोगः। 'गौरनाद्यन्तवती'-त्यादौ हि मुख्यार्थानुपपत्तिः। 'अनाद्यन्तवती जनित्री भूतभाविनी'त्याद्यनेकपदमुख्यार्थलाभश्च प्रयोजनम्। 'आत्मानं रथिनं विद्धी'त्यादौ च ब्रह्मप्राप्त्युपायताख्यापनम्। 'असौ वा आदित्यो देवमधु' इत्यादौ चादित्यादिभोग्यत्वख्यापनम्। न चैवमिहेति। अपिच कृत्स्नजगत्कारणभूतायाः स्वास्मिन्ननादिकालसम्बन्धसकलचेतननिखिलसुखदुःखभोगापवर्गसाधनभूताया अचेतनाया अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषच्छागारूपत्वकल्पनं विरुद्धम्। अपिच 'अजामेकाम्', 'अजो ह्येकः', 'अजोऽन्यः' इति विरूपार्थकल्पनायोगात्। सर्वत्र च्छागत्वकल्पनायां 'जहात्येनां भुक्तभोगामजोऽन्यः' इति विदुष आत्यन्तिकप्रकृतिपरित्यागकारिणः पुनरजासम्बन्धयोग्यच्छागत्वकल्पनाविरोध इति।

तदिदं दासेरश्रद्धेयमसारम्। अजशब्दो हि रूढ्या तावच्छागजातिमुपस्थापयति। प्राकरणिकार्थं तु प्रकरणसम्बन्धविमर्शेन। तत्र प्रथमोपस्थितिभङ्गेन योगकल्पनादपि तदभङ्गेनाभिधापूर्वकगौणवृत्तिग्रहणं न्याय्यं, लाघवात्। 'लोहितशुक्लकृष्णामि'ति च प्राकरणिकात्मशक्तिवृत्ताजासामानाधिकरण्यात् तदवस्थान्तरोपक्षेपात् प्रागेव रूढिपूर्ववृत्त्यैव रजस्सत्त्वादिवृत्तामिति युक्तम्। अपिच नेहाजादिशब्दो गौण उपेयते, मायादावभेदारोपेण प्रतिमाशुक्त्यादौ विष्णुरजतादिशब्दवन्मुख्यत्वोपगमात्।

ननु कल्पनानर्थक्यम्। किं कुर्मः। आम्नातस्य ह्यर्थं वक्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुम्। अपि[2]च लोकदृष्ट्या प्रतिपाद्यबुद्धिसौकर्यं प्रयोजनं, कल्पनामात्रे प्रयोजनैकरूप्यानियमस्यामूलत्वात्। न चार्थविरोधः, कार्यकारित्वप्रयोजनसाधनत्वचेतनसङ्गमत्यागादिमात्रस्य विवक्षितस्याविरोधात्। नहि तादात्म्यारोपमूले रूपके सर्वसाधर्म्यापेक्षा, 'आत्मानं रथिनं विद्धि', 'प्रणवो धनुः शरो ह्यात्मे'त्यादिभङ्गप्रसङ्गात्। नन्वत्र पृथक्प्रयुक्तरूप्यरूपकपदावैयर्थ्याय यथायुक्तसाधर्म्यमात्रेण रूपकमाद्रियते। न चैवमजामित्यादाविति चेत्। तदिदमलङ्कारविदामसम्मदमावहति। पृथगुभयपदाभावेऽपि हि

१. 'न्यराक्षे' २. 'पि ला' ख. पाठः.

"रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः"

तथाचाथर्वणिका अधीयते—

"गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।
सितासिता च रक्ता च सर्वकामदुघा विभोः ॥"

इति । यत्तु—प्रकृतौ गोपदयोगासम्भवादगत्या तत्र कल्पनाश्रीयत इति । तन्न, गमेर्डोप्रत्यये गच्छति नानावस्थामिति योगसम्भवात् । एवमनाद्यन्तवतीत्यादिविशेषणाञ्जस्यं च स्यात् । अन्यथा सम्पन्न्यायेन विषयन्यग्भावादारोप्यगोरूपे तद्विशेषणानाञ्जस्येन व्यतिरेकसङ्करप्रसङ्गात् । क्लृप्तोपस्थितरूढ्यनुसारश्चाजाशब्देऽपीष्यताम् । तत्र योगोऽपि[2] क्लृप्त इत्यविशेष इति चेत्, तथाप्यसन्दिग्धप्रकृतिमायादिस्वशब्दहानेनाजाशब्दग्रहणमभिधावृत्त्यनुगतार्थविवक्षां गमयति । न चैवं सूत्रे यौगिकचमसदृष्टान्तासामञ्जस्यम् , उभयथापि प्रकरणादिनिर्णेयार्थत्वाविशेषे योगाभ्युपगमवादोपपत्तेः । अपिच न जन्मराहित्यब्रह्मजत्वाविरोधाय कल्पनोपदेशादितीति युक्तम् । क्वचिदप्यजाया ब्रह्मजत्वानाम्नानेन विरोधशङ्कानुन्मेषात् । शाखान्तरे च 'अणोरणीयानि'त्यादिसृष्टिप्रकरणसमाम्नानमात्रस्यान्यत्र 'किं कारणं ब्रह्मे'ति विमृश्य 'अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामि'ति क्लृप्तसहकारिविधिपरत्वोपपत्तेरतदान्वितसृज्यत्वानभिप्रायात्, 'सृजमानामि'ति स्रष्टृकोटिनिवेशस्य प्रत्यक्षत्वाच्च । ननु च ज्योतिरुपक्रमेति सूत्रितम् । तत्प्रधाना ब्रह्मशक्तिरिति भविष्यति । तन्मिथ्यात्वोपपत्तिसूचनाय परमुपक्रमशब्दः प्रयुज्यत इत्युक्तम् । अपिच सृष्ट्युपदेशादिति यद्यजाया एवेत्युच्येत, तदेवेदं विरोधशङ्काबीजमिति न समाधिः । अथ तेजोऽबन्नादेरित्युच्येत, अजाया ब्रह्मजत्वविरोधे न समाधिः । अथोच्येत—'अस्मान्मायी सृजते विश्वमेतदि'ति सृष्ट्युपदेशविशेषो हेतुः । तत्र मायीति स्रष्टृविशेषणतया प्रलयेऽपि सूक्ष्मरूपस्थितिदर्शनाज्जन्माभावः सूच्यते । अस्मान्मायारूपात् सृजते विश्वमिति विश्वोपादानत्वेन तदवस्थापत्तिदर्शनात् तदात्मना ब्रह्मजत्वं सूच्यत इति विरोधसमाधिरिति । एवं ह्यवस्थाभेदादविरोध इति फलितोऽर्थः । इयति च वक्तव्ये 'कल्पनोपदेशादि'ति नेयार्थं सूत्रयतो महाकविबादरायणस्य न फलमौत्प्रेक्षिकसमयाजीवेनापि शक्योत्प्रेक्षम् । अपि-

१. 'पयो', २. 'योऽपि' ख. पाठः.

चैवं 'मध्वादिवदि'ति दृष्टान्तासङ्गतिः। न च यथा आदित्यस्य कारणावस्थायां मधुत्वमुदयावस्थास्तमयाभावश्च, कार्यावस्थायां च मधुत्वमुदयादिश्च 'असौ वा आदित्यो देवमधि'त्यादिश्रुतेः, एवमवस्थाभेदेनाजात्वं ब्रह्मजत्वं चेति सङ्गंस्यत इति वाच्यम्। न हि 'असौ वा आदित्योदेवमध्वन्तारिक्षं मध्वपूपो द्यौरेव तिरश्चीनवंश' इत्यादिकल्पनाप्राये मधुत्वमेवादित्यस्य न्याय्यमुपगन्तुम्। तथापि 'कल्पनोपदेशादि'ति विवक्षितविषयावैरूप्येण दृष्टान्तासङ्गमनाच्च। अपिच तवाजाया लोहितशुक्लादिभावस्य कार्यावस्थोपपाद्यत्वे तथैव ब्रह्मोपक्रमत्वमपीति किं कल्पनोपदेशादिति सूत्रेण। तस्मादजामिति च लोहितशुक्लकृष्णामिति च तुल्यवत् स्वार्थवृत्तिविरोधो न शङ्कनीयो मध्वादिवत् कल्पनयोपदेशादित्येव समञ्जसमित्यलं प्रसक्तानुप्रसक्तपल्लवेन ॥

---

### भावरूपाज्ञाननिगमनम्।

तदेवमेषा साशेषप्रमाणोपपत्त्युत्तम्भनीयानिर्वचनीयानादिभावस्वभावात्मशक्तिरविद्या माया निर्विशेषप्रकाशानन्दसत्तामात्रात्मनि बाह्याभ्यन्तरसकलविकल्प[1]कल्पनामूलमिति तद्विषयप्रत्यक्षादिप्रमाणानामवसादान्निरमित्रनिर्विशेषवस्तु[2]परनिगमोपपादितब्रह्मात्मतादात्म्यावबोधेन निरवशेषनिषेधविकल्पमयेन तदविद्याद्यपवादे 'तरति शोकमात्मवित्', 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतेरात्मनः स्वरूपप्रतिष्ठाकैवल्यावैकल्यादौपनिषदेषु मतिवैकल्यापादनं तान्त्रिकस्य मध्याह्नहंसे पांसुपरिक्षेपमनुसरति ॥

---

### अज्ञाने परकीयचोद्यसमाधिः।

यद्येवमविद्यात्मानं बन्धं विद्याबाध्यमभिप्रेयेत सूत्रकृत्, तदधिगम उत्तरपूर्वाघादेरश्लेषविनाशौ, विद्यया सुकृतादिहानावुपायनं सुहृदादिभिः, भोगेनारब्धक्षपणं, मनआदिषु वागादिसंपत्तिः इत्येवमादिसूत्राणि विरुध्येरन्, आर्थिकं च सूत्रार्थं कल्पयता तदविरोधो ह्युपजीव्य इति।

उच्यते— सगुणविद्यासाधारण्येन हि कर्माश्लेषादयः सूत्र्यन्ते। तावतापि हि

---

१. 'ल्पना', २. 'स्तुनि' ख. पाठः.

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अभ्यस्यति च तद् भूयो जन्तुर्जन्मनि जन्मनि ॥"

"न चैकभविकं कर्म नृतिर्यग्योनिसाधनम् ।
तस्मादनर्थिकाविद्येत्यनाशङ्कं प्रवर्तते ॥"

नचाहम्ममादिभेददृशि घनात्मनो निर्विशेषात्मतत्त्वं न्यायतोऽनुपहृत्य निरालम्बमशेषस्याविद्यामयत्वं विद्याबाध्यत्वं च द्रागिति शक्यं व्युत्पादयितुम् । न वा निर्विशेषात्मतत्त्वव्युत्पादनार्थलभ्ये तत्र सूत्रवचनवृत्तिरर्थवती । निर्विशेषात्मतत्त्वव्युत्पादनं च सूत्रेषु दर्शितमित्यतो न कोऽपि विरोध इति ।

यत्तु — बन्धस्यापारमार्थ्ये भ्रममात्रसिद्धस्य हेतुहेतुमद्भावाद्ययोगेन कर्मनिमित्तत्वाद्यनुपपत्तिः । न चापारमार्थ्यस्य भ्रान्तिसामग्र्यतिरिक्तहेतुसापेक्षत्वं क्वचिद् दृष्टम् । अपिचैवं विगीतकरणेऽपि न प्रायश्चित्तमपेक्ष्येत । अलं मिथ्येति बुद्धिरेवेति ।

अत्र वदामः — भ्रान्तिसिद्धस्य हेतुहेतुमत्त्वायोग इति क्व दृष्टमिति स व्याचष्टाम् । नेष्टो हि परस्य मिथ्यार्थः । तदिष्टौ च तद्दृष्टान्तेनैव यथाव्यवस्थितदृष्टविशिष्टरूपस्यैव सर्वस्य मिथ्यात्वसिद्धौ पर्यनुयोगायोगात् । न हि मिथ्यासिद्धस्य हेत्वादिव्यवस्थास्माभिरास्थीयते, किन्तु यथासिद्धस्य मिथ्यात्वम् । न च मिथ्यार्थस्य भ्रान्तिसामग्र्यतिरिक्तहेतुसापेक्षत्वानुपपत्तिः, इष्टानिष्टभ्रमस्य सुखदुःखादिहेतुतया पुण्यपाप[1]सापेक्षत्वे[2] तत्सामग्रीपरिमाणानियमात् । विगीतकरणे च परोक्षमिथ्याबुद्धावपि सासङ्गस्य प्रायश्चित्तापेक्षोपगमात् । असङ्गात्माधिगमे चोत्तरपूर्वाघाश्लेषविनाशोपगमेन तदनपेक्षायामप्यविरोधादिति ॥

---

## निवर्तकानवस्थोद्धारः ।

यत् पुनरविद्यादिनिवर्तकागमिकज्ञानमपि मिथ्येति तन्निवर्तकान्तरापेक्षायामनवस्था । अथोच्येत —

१. 'पापेन सा', २. 'त्वेन त' ख. पाठः.

"अज्ञानमृत्युर्विज्ञानं मृत्युः स्वस्यापि तत् तथा ।
तत् कातकरजोन्यायान्नानवस्थामिहानयेत् ॥"

इति । तथापि तन्निवृत्तेरात्मातिरेकेऽविद्यारूपाया विवर्तकान्तरापेक्षायामनवस्थानात् । ज्ञानादेरुत्तरावस्थात्मनो निवृत्तेर्भावान्तरस्य सत्त्वोपगमेऽद्वैतहानिप्रसङ्गाच्च । तस्यास्तदनतिरेके च सर्वस्य स्वनाशे सत्युत्पत्तिविरोधान्निवर्तकज्ञानोत्पत्तिरेव न स्यादिति । तन्न । सत्यामेव क्लृप्तोपलम्भकसामग्र्यामनन्याश्रयोपलब्धानुपलम्भदशावच्छिन्नः स्वोत्तरदशावच्छिन्नो वा आश्रय एव वस्तुनो निवृत्तिरिति ज्ञानादिप्रागवस्थात्मनोऽतद्ध्वंसत्वेन तदुत्पत्त्यविरोधात् । न च ब्रह्मानर्थध्वंस इति साक्षात्क्रियते, येन विकल्पमयी सा कल्पना स्यात्, किन्तु स्वरूपेण । तत्प्रतियोगिविशेषापेक्षया तद्ध्वंस इति व्यवहारे परं विकल्प्यते । मुक्तौ च सर्वव्यवहारातिपातिन्यां प्रकाशानन्दसत्तामात्रावसानायां न कापि कल्पनेति क्वानवस्था । अग्रे चाविद्यादिनिवृत्त्यतिरेकादिविकल्पे वक्ष्यामः । यत्तु — भगवत्प्रीत्यप्रीतिरूपं कर्म, तत्र यः संसारफलानुगुणः सङ्कल्पः स तन्नाशः । तस्यापि मोक्षानुगुणः सङ्कल्प इति, तन्न । एवं कादाचित्कधर्मवतोऽवश्यं विकारित्वादिप्रसङ्गात् । आगमिकविद्यामूर्तसाधनभावव्यवधानप्रसङ्गाच्चेति ।

यत्पुनः—अविद्यादिनिवर्तकस्यागमिकज्ञानस्य न तावदध्यस्तरूपो जीव आश्रयः, निषेध्यतया तस्य कर्मणो निवर्तकज्ञाने तदैव कर्तृभावविरोधात् । नापि ब्रह्म, तस्य स्वतो ज्ञातृत्वानुपगमात् । तदध्यासे च तन्मूलाविद्यादिनिवर्तकज्ञानान्तरापेक्षया ज्ञातृत्वकल्पनानवस्थानात् । अपिच निवर्तकज्ञानस्य स्वरूपमाश्रयो ज्ञाता च स्वनिवर्त्यान्तर्गतमिति न युक्तम् । न हि तदेवच्छेदनं छेत्ता च स्वच्छेद्यान्तर्गतमिति सम्भवति । अपिच ज्ञातुः स्वनाशस्यापुमर्थत्वेन ज्ञानार्थिप्रवृत्त्यनुपपत्तिरित्यलं दिष्टहताघातेनेति ।

तदिदमविदितस्वपरपक्षदोषगुणविवेकस्य बालिशस्य प्रलापः । तथा हि — ज्ञाता तावत् प्रसिद्धोऽस्मदर्थः । स तु सर्वविकल्पसाधारणनिषेधोपधेयरूपभेदेन कर्मापि निवर्तकज्ञाने कर्तापि स्वरूपेण स्यात् । रूपभेदेन हि स

१. 'तसूत्रासा' ख. पाठः.

एव कर्ता कर्मणः स्वामी चोपपाद्यते । 'तदात्मानँ स्वयमकुरुते'त्यागमिककर्तृकर्मभावस्यापि रूपभेदोपपाद्यत्वात् ।

तत्रापि ह्यात्मा ब्रह्मात्मकतयोपासनाकर्मैवोपासितोपगम्यते । तदाश्रयेण च ज्ञानेन स्वस्वाश्रयादिनिवृत्तिरुपपद्यते । भावशक्तिभेदस्यानुपमेयत्वेनच्छेदनादिदृष्टान्तानुपपत्तेः । दहनो हि गहनदाहाय निसृष्टः स्वस्वाश्रयनिवर्तको दृष्टः । तत्रापि ह्युपासनेन मनोवृत्तिमयेन स्वरूपं विशिष्टश्चोपासिता निवर्तनीयः, भगवत्सङ्कल्पस्य तद्द्वारत्वोपपत्तेः । अन्यथा 'स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः', 'भिद्यते हृदयग्रन्थिरि'त्यादिज्ञानमुक्तिहेतुताज्ञानविरोधात् । ज्ञातृस्वरूपविनाशापुमर्थत्वादि च समाधिष्महि । वस्तुतस्तु यावद्विशेषनिषेधविकल्पवृत्तिविज्ञानावभासिस्वरूपचैतन्यमेव सर्वस्य बाध इत्यावेदितमधस्तादिति ॥

---

## विदुष उत्क्रान्त्यादिचिन्ता ।

अत्राह—न स्वरूपावगतिपर्यन्तविज्ञानसमसमयमविद्यादिबाधादात्मनः स्वरूपप्रतिष्ठाकैवल्यमपवर्ग इति युक्तम् । विदुषोऽप्युत्क्रान्तिगतिश्रवणात्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति प्रक्रम्य तत्प्रकाराभिधानतात्पर्येण 'अस्य सोम्य! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इत्यनुक्रमणात्,

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥"

इत्यादिश्रवणाच्च । परविद्याविषयं चेदं, प्रकरणसम्बन्धात् । न च सर्वात्मनि ब्रह्मणि गतिरफलेति गतिलिङ्गेनैव प्रकरणादुत्कृष्यापरविद्याविषयं नीयते । अन्यथा

"अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"

इत्यादिविरोधादिति वाच्यम् । 'समः प्लुषिणे'त्यादि 'समोऽनेन सर्वेणे'ति श्रुतेरपरब्रह्मणोऽपि सर्वगतत्वेन तत्रापि गतिवैफल्यापातात् । अपराविदो भोगो वा तत्त्वज्ञानं वा लोकविशेषापेक्षमिति गतिरर्थवती । 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके', 'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' इति श्रुतेरिति चेत् । तर्हि पराविदोऽपि लोकविशेषप्राप्त्यपेक्षमेव लिङ्गभङ्गेनापहतपाप्मत्वादिस्वरूपाभिनिष्पत्तिर्जगद्व्यापारवर्जमैश्वर्यं चेति गतिर-

र्थवती किं न स्यात्। विदुषो हि विधूतसुकृतदुष्कृतस्याप्यर्चिपथे 'तमागतं पृच्छति कोऽसीति तं प्रति ब्रूयादि'त्यादिचन्द्रसंवादस्य ब्रह्मलोके 'तमाह कोऽहमस्मीति सत्यमिति ब्रूयादि'त्यादिब्रह्मसंवादस्य च श्रवणेन सूक्ष्मदेहानुवृत्तिरवगम्यत इत्यतो न प्रकरणादुत्क्रमणादेरुत्कर्षो न्याय्यः। 'अथ मर्त्योऽमृतो भवती'ति च

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः"

तदैवोपासनारम्भान्मर्त्योऽमृतो भवति। कथम्। अत्र हि कामविमोकेनोपासने स्थितोऽर्चिरादिगत्या ब्रह्म समश्नुत इत्येवम्परम्। अथवा, अप्लुष्टदेहेन्द्रियादिसम्बन्धस्यैवेदममृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपमुच्यते। अत्र ह्युपासनवेलायां ब्रह्मानुभवतीत्युपपन्नम्।

अथ ब्रह्मविदो 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती'त्युत्क्रान्तिः प्रतिषिध्यते। विधीयते च सेति परापरविद्विषयव्यवस्था वाच्या। न। अन्यथासिद्धेः। तस्य विदुषो ब्रह्मसम्पत्तौ तावदेव चिरं यावद् देहसम्बन्धेन मोक्ष्यत इत्यवधारणात् साम्पराय एव सुकृतदुष्कृतहानौ लोकविशेषगत्या भोक्तव्याभावाद् वा सहैव देहेन प्राणस्य वियोगप्रसक्तौ शारीरस्यार्चिरादिपथप्राप्यदेशविशेषे ब्रह्मसम्पत्तिपर्यन्तं तदवियोगपरत्वात्। न चायं शारीरादुत्क्रान्तेः प्रतिषेधः। तदश्रुतावपि तदपादानस्यापेक्षितस्य ते यदासाच्छरीरादुत्क्रामन्ति 'एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' इत्यविद्वद्विषये श्रुतस्योपसंहारादिति वाच्यम्। स्ववाक्ये तस्येत्युपस्थितस्यैव शारीरस्यापादानत्वमात्रकल्पने लाघवात्। सम्बन्धसामान्यषष्ठ्या च विशेषापेक्षया नटस्य शृणोतीत्यादाविव प्रकृतानपेक्षितोपकरणोपकरणिभावादपेक्षितापादानत्वे पर्यवसानौचित्याच्च। 'न तस्मात् प्राणा उत्क्रामन्ती'ति माध्यन्दिनपाठेन निश्चितार्थेनानिश्चितार्थस्यास्य नेयत्वाच्च। आर्तभागप्रश्नेऽपि 'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति, नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इत्यत्र यदि विदुषो यदि वाविदुषः शारीरादेव पुरुषशब्दादुत्क्रान्तिप्रतिषेधो गम्यते 'स उच्छ्वयती'ति चाहमभिमानविषयतया पुरुषाभेदोपचारान्निर्देशः। एवमेव हि 'योऽकामो निष्काम आत्मकाम आप्तकामो न तस्मादि'त्यादौ शारीरे प्रकृते

परस्यापि शरीरनिर्देशो नेयः। अपिच नायं विद्वद्विषयः, तत्र तदप्रसङ्गात्। 'अग्निर्वै मृत्युः सोऽपामन्नमि'त्यपामग्न्यन्नत्वेनोपासनमुक्त्वा तत्फलमुच्यमानम् 'अपपुनर्मृत्युं जयती'त्यग्निजयमेव ह्यभिप्रैति। न संसारमृत्युतरणं, येन पूर्ववाक्ये कथञ्चिद् विदुषः प्रसङ्गः शङ्क्येत। न चात्र 'यदिदं सर्वं मृत्युनाप्तं सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यते' इत्याश्वलप्रश्ने 'होत्रर्त्विजा अग्निना वाचा वाग्वै यज्ञस्य होता, स मुक्तिः सातिमुक्तिरि'त्यध्यात्ममधिभूतं च वाग्घोत्रोरग्निभावोपासनयेत्युत्तरिते दृष्टान्तमात्रम् 'अग्निर्वै मृत्युः सोऽपामन्नमि'त्युच्यत इति युक्तम्। अध्यात्मादिपरिच्छेदाभिमानरूपमृत्य्वतिक्रमणस्य मुक्तिशब्दितस्य ब्रह्मलोकाप्तेरतिमुक्तिशब्दितायाश्चोपलब्धेरौपदेशिकत्वाच्चासम्भवशङ्काबीजाभावेन दृष्टान्तवचनस्यानतिप्रयोजनत्वात्। अन्यथा अग्निमृत्योरपामुच्छोषणोऽन्यो मृत्युर्दृष्ट इति सर्वमृत्युमृत्योरपि मृत्य्वन्तरशङ्कायाः प्रेक्षामात्रमूलाया दुरुच्छेदत्वप्रसङ्गात्। प्रत्युतास्याविद्वद्विषयत्वमुत्तरसन्दर्भादवसीयते, 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवति' इति प्रश्ने 'तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति कर्माश्रयत्वप्रतिपादनात्। तदेवमविदुष उत्क्रान्तिप्रश्नः प्रतिषेधो वा न शरीरात्। तत उत्क्रान्तेरसान्दिग्धत्वात्। किन्तु शारीरादिति युक्तम्। पुरुषस्योपासनादिफलभागिन एव प्रकृतस्यास्मादित्यवमर्शात्। न च पुरुषो म्रियत इति शरीरमुच्यते। पुरुषस्य मृतस्येति च शारीर इति युक्तम्। निर्देशसाम्यादैकार्थ्यसम्भवात्। न चोभयत्र शरीरैकार्थ्यं युक्तम्, पुरुषस्य पृथिवीं शरीरमप्येतीति निर्देशभेदायोगात्। 'स उच्छ्वयती'ति तु देहोऽवमृश्यते, परोक्षवृत्ततया अयमस्मादिति शारीरनिर्देशवैलक्षण्यात्। देहस्यापरोक्ष्येऽप्युत्क्रान्तात्मापेक्षया व्यवधानेन परोक्षवन्निर्देशो युज्यते। स च म्रियत इति प्रकृतः। मृतिर्हि देहादपसृप्तिरात्मनो देहव्यपाश्रयो वा जनिमृतिव्यपदेशो भाक्त इति। कथं पुनरविदुषः शारीरादुत्क्रान्तिरप्रसक्ता निषेद्धव्या यदि विदुषो

---

१. 'मात्मौ' क. पाठः.

न तस्य प्राणा उत्क्रामन्ति शारीरादिति न गम्येत । तदतो विदुषो विशिष्य शारीरादुत्क्रान्तिनिषेधादविदुषः प्रसक्ता सा निषिध्यत इति युक्तम् ॥

---

## अर्चिरादिपर्वणा गतस्य ब्रह्मप्राप्तितदनुभवप्रकारः ।

'तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमि'ति प्रकृत्य 'स एनान् ब्रह्म गमयती'ति विदुषोऽर्चिरादिगत्या ब्रह्मगमनश्रवणाच्च । तथाच स्मृतिः—

"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परं पदम् ॥"

"य एनमेतद् विन्दन्ति ये चारण्यकमाश्रिताः ।
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥
क्रमात् ते सम्भवन्त्यर्चिरहश्शुक्लं तथोत्तरम् ।
अयनं देवलोकं च सवितारं सवैद्युतम् ॥
ततस्तत्पुरुषोऽभ्येत्यामानवो ब्राह्मलौकिकान् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥"

इति,

"अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥"

इति च । एतदुक्तं भवति—आरब्धभोगावसाने विदुषो म्रियमाणस्य यदा वाङ् मनसि सम्पद्यते मनः प्राणे प्राणो जीवे स सप्राणस्तेजसि भूतेषु तेजः (तेजः) परस्यां देवतायामविभागेन सम्पद्यते, तदा 'तस्यैतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतेन' स विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च प्रकाशितद्वारः सूपासितहार्दब्रह्मानुगृहीतः शताधिकया मूर्धन्यनाड्यास्माच्छरीरादुत्क्रम्यार्चिरहरापूर्यमाणपक्षोदगयनसंवत्सरवाय्वादित्यचन्द्रमोविद्युद्वरुणेन्द्रप्रजापतिभिरातिवाहिकैरतिवाहितो वैद्युतेनैवामानवपुरुषेण ब्रह्मलोके ब्रह्म गमितः परं ज्योतिरुपसम्पद्य तदभिनन्दितः स्वेनापहतपाप्मत्वादिरूपेणाभिनिष्पद्यते । एवमस्य परिद्रष्टुरिमाः

षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति स विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता । स एतमानन्दमयमात्मानमुपसङ्क्रम्येमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिः । स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । स एकधा भवति त्रिधा भवति। न च पुनरावर्तते । रसं ह्येवायं लब्ध्वा ब्रह्मणः स्वरूपगुणविभवानुभवेनानन्दी भवति । अथापि चायं कर्मनिमित्तप्राकृतनामरूपनिर्मुक्तोऽपि भूतवशितया तत्सारोपादानोऽन्यथा वा स्वच्छन्दने सङ्कल्पादेव लीलाविग्रहमुपाददीत यदि वा न । तथा स्वसृष्टमीशसृष्टं वा पित्रादि सङ्कल्प्य वसुदेवादीनीश इव तेन लीलारसमनुभवति यदि वा न । नह्यत्र 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति मुमुक्षुशरीरसम्बन्धिन उच्यन्ते, येन

"विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः"

इति तेषामविदुषां ब्रह्मलोके समागमायोगात् तेषु यथाकर्म यथाश्रुतं विपरिवर्तमानेषु मनोरथमात्रविहारी मुक्तोऽपि भ्रान्तः स्यात् । किन्तु यथायथमेव पित्रादीन् सङ्कल्पयति न वा सङ्कल्पयति । अथ 'ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दते' इति तत्तत्पित्रादिव्यक्तिविशेषाणामेव लाभोऽनुश्रूयते । न । उक्तानुपपत्त्या पितृत्वाद्युपाधिकाभेदेनैव तद्वृत्तव्यक्तिकल्पनाद्, येषां यानि कर्माणि प्राक् सृष्ट्यां तान्येव ते प्रपद्यन्ते, यथर्तुष्वृतुलिङ्गानि पर्यये तानि तान्येव दृश्यन्त इत्यादिदर्शनात् । न च 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इत्याविर्भूतस्वभावस्तस्यातिगतोर्मिषट्कस्य प्रागेव श्रोत्रियस्याकामहतस्याप्तकामस्य पितृमातृभ्रातृस्वसृसखिगन्धमाल्यान्नपानगीतवादित्रस्त्र्यादिकामानुपपत्तिः, कामयमानो वा ब्राह्मलौकिको न मुक्त इति वाच्यम् । ईश्वरस्येव लोकवल्लीलाकैवल्येन तथा तथा सङ्कल्प्य लीलारसानुभवाविरोधात् । श्रूयते चेश्वरस्य कामसङ्कल्पादि 'सोऽकामयत बहु स्यां प्रजायेयेति', 'तन्मनोऽकुरुतात्मन्वी स्यामित्यादि ।

यत्तु—"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे"

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति भूतसंप्लवे तदध्यक्षेण सह मोक्षं दर्शयति । ब्रह्मलोकादेव पुनरावृत्तिं च

"आ ब्रह्मभुवनाल्लोकाः पुनरावृत्तिनोऽर्जुन !"

इति । तदिदं सुकृतविशेषगम्यापरब्रह्मलोकविषयं योजयिष्यते । तथाच लिङ्गम्—

"एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ।
तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥"

इति । मुक्तस्तु धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवति । न च सोऽपि तवोपासनामयपुण्यकर्मकृतोऽनित्यः स्यादिति शङ्क्यम् । उपासनायास्तुल्यविषयशान्तोदितप्रत्ययसन्तानात्मनः श्रुतौ ज्ञानव्यपदेश्याया नित्यसिद्धब्रह्मलोकाहेतुत्वाद्, उपासितसाक्षात्कृतब्रह्मानुग्रहे सति निवृत्तनिखिलकर्मावरणस्य ब्रह्मलोके ब्रह्मोपसम्पत्त्या स्वरूपाभिनिष्पत्त्यादिहेतुत्वोपगमाच्च । तस्य च पुनरावृत्तिरनाशङ्कनीया, निरनुशयत्वात् । कृतात्ययेऽनुशयवान् ह्यावर्तते, 'तद् य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमि'त्यादिश्रुतेः । 'स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय तच्छेषेण विशिष्टदेशजातिकुलरूपायुरश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ती'ति ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तन्त इति च स्मृतेश्च । 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते', 'स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः', 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्ति'रित्यादिश्रुतेः,

"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः"
"मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते"

इत्यादिस्मृतेश्च। तथाच सूत्रम्—'अनावृत्तिः शब्दात्' (ब्र० ४. ४. २२) इति। तदेषः 'स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति', 'सर्वेऽस्मै देवा बलिमावहन्ती'ति सविभूतिकं सकलकल्याणगुणात्मकं विकारावर्ति ब्रह्माकर्मप्रतिहतनिरतिशयविकासिनित्यविज्ञानेनानुभवन्नेवेमान् लोकान् हैरण्यगर्भादीन् ब्रह्मविभूतिभूताननुसञ्चरन् स्वच्छन्दं भुङ्क्ते तदाश्रितान् भोगान्। तेषामनित्यत्वेऽपि न काचिद् मुक्तस्य क्षतिः। तदानीमप्यप्रच्युतगुणाष्टकत्वादपरिच्छिन्नानन्दत्वोपपत्तेः। न खलु जगत्प्रलयादीश्वरस्यैश्वर्यभङ्ग इति। तस्माद् ब्रह्मविद्ययोपासनामय्या मुक्तस्य देवयानगत्यैव ब्रह्मलोके परं ज्योतिरुपसम्पन्नस्य निर्धूतनिरवशेषावरणस्य निरतिशयानन्दस्वरूपसविभूतिकब्रह्मयाथात्म्यानुभवो जगद्व्यापारवर्जमैश्वर्याविर्भावश्च मोक्षो न त्विहैवात्मतत्त्वसाक्षात्कारेण ब्रह्मभूयलक्षणस्वरूपप्रतिष्ठाकैवल्यमिति॥

---

## परविद उत्क्रान्त्याद्यनपेक्षा देशविशेषे भोगाभावश्च।

अत्राभिधीयते—न तावत् परवेदनमुत्क्रमणादि ब्रह्मप्राप्तावपेक्षते सर्वगतत्वेन सर्वात्मत्वोपगमात्, स्वात्मभूतब्रह्मप्राप्तौ तत्प्रयोजनाभावात्। ब्रह्मविद्यया हि साक्षात्कारपर्यन्तया कर्मक्षयस्तावदनुत्क्रामत एव स्यात्

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"
"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि"

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यादिश्रुतेः। 'स एतं देवयानं पन्थानमापद्य' इति प्रकृत्य 'स आगच्छति विरजां नदीं तां मनसात्येति तत् सुकृतदुष्कृते विधूनुते इति च पाठमात्रम्। विदेहस्य भोगायोगेन तावत्कर्मानुगतिफलाभावात्, ताण्डिशाट्यायनिश्रुत्यनुगृहीतविद्यासामर्थ्याद्यर्थस्वभावाविरोधेन तत्क्रमभङ्गात्। तथाच सूत्रम् 'साम्पराये

तर्तव्याभावात्—'(ब्र० ३. ३. २७) इत्यादि। एवं विद्यासामर्थ्येन सकलकर्मक्षये न लिङ्गसम्बन्धः। येन देशविशेषे लिङ्गभङ्गाय गत्यादिरपेक्ष्येत। विद्वान् हि पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। अन्यथा विशेषाभावेन आत्तो वै सशरीरः प्रियाप्रियाभ्यां सलिङ्गोऽपीति तद्धेतुकर्मानुवृत्त्यवश्यम्भावे विद्यया निरवशेषकर्महानश्रुतेरर्थस्वभावस्य च विरोधात्। यदि च विद्यैव लिङ्गानुवृत्तौ विशिष्टभोगे च हेतुरिष्येत, विपरीतफला विद्या मुमुक्षोरापद्येत। न चोद्देश्यब्रह्मसम्पत्तये विद्या लिङ्गमवस्थापयति यथाकर्म स्वरादिसुखदुःखभोगाय वपुरिति वाच्यम्। स्वर्गिनारकिदेहादेरपि कर्मफलैकदेशत्वेनानुदाहरणत्वाद्, विद्यया लिङ्गभङ्गेन ब्रह्मसम्पत्तौ लिङ्गस्थित्यपेक्षाविरोधाच्च। नहि विद्या निरपेक्षा समर्था च विलम्बते चेति युक्तम्। न च देशविशेषापेक्षमस्याः सामर्थ्यम्। मानाभावात्। न च 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति, तत्र देशविशेषानुद्देशात्। प्रत्युत 'विद्वान् पुण्यपापे विधूय निरञ्जनः' इति तत्कालमेव लिङ्गासम्भेदस्य विवक्षितत्वावगमात्।

विद्यया भोगभेदो देशविशेषापेक्ष इति चेत्। न। विद्याविहतनिखिलकर्माविद्यापावरणं मनोऽस्य दिव्यं चक्षुरिहैवाविर्भवतु। तेन च मनसैतान् कामान् पश्यन् रमताम्। य एते ब्रह्मलोक इत्युपपत्तेः, सर्वभोगविरक्तस्यैव ब्रह्मविद्याधिकाराच्च। अप्राकृतो भोगो मोक्ष एवेति चेत्। को नामायम्। सङ्कल्पमात्रोपनत इति चेत्। तत् किं शाम्बरिकसङ्कल्पितभोगोऽप्यप्राकृतोऽस्तु, प्राकृतविषयोपादानस्य तस्याप्राकृतत्वानुपपत्तेश्च॥

---

**स्वमतम्।**

'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः' (ब्र० ४. ४. १८) इति सूत्रे हि 'तस्य सर्वेषु लोकेषु कामचारो भवति', 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इति श्रुत्या हिरण्यगर्भादिलोकस्थभोगेषु मुक्तस्य यदीच्छा वर्तते तत्र तत्र यथाकामं परमपुरुषानुग्रहेण वर्तमानस्तत्स्थान् भोगान् भुङ्क्ते इति तान्त्रिकेणैव वेदान्तदीपाभिधे ग्रन्थे दर्शितम्। न चोच्छिन्नकर्मबन्धस्या-

१. 'कभो' ख. पाठः.

सङ्कुचितज्ञानस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा सम्भवति । अन्यथा तदर्थारम्भाय पुनरावृत्तिप्रसङ्गात् । इच्छया कर्मणा वा देहसम्बन्धस्याहमित्यभिमानात्मकस्यावृत्तेरनिष्टत्वात् । अत्र मुक्तसङ्कल्पभेदेन भोगवैशेष्योपपत्त्या मुक्तितारतम्यप्रसङ्गं चावोचाम । न च सविभूतिब्रह्मस्वरूपानुभवायैव देशविशेषापेक्षा, विद्ययैवाविद्यावरणभेदे सत्यारब्धदेहावसाने निरङ्कुशविसृमरनित्यविज्ञानस्येहैव स्वात्मभूतब्रह्मस्वरूपादिविषयत्वोपपत्तेः । नहि क्षेत्रिकयत्नेन वरणभेदे कीलालस्य केदारव्याप्तौ किञ्चिदन्यदपेक्ष्यते, तद्वत् । न चादित्यादीनां ब्रह्मविदामुत्क्रान्तिरर्चिरादिगतिर्वा युज्यते । न चादित्येन्द्रादेरुत्तरा गतिः स्यादिति¹ शक्यम् । ये सत्यमुपासते तेऽर्चिषमभिसम्भवन्तीत्यविशेषश्रवणात् । 'ये वै केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'त्यत्र 'जायस्व म्रियस्वेत्वेतत् तृतीयं स्थानमि'त्यादेरिह विशेषदर्शनस्याभावेन सङ्कोचायोगात् । औचित्यन्यायस्तु न प्रवर्तते, परविदामुत्क्रान्तेरर्चिरादिगतेश्चाधुनैव निरूप्यत्वात् । ब्रह्मविद उत्क्रान्तिगत्यादय आम्नायन्त इति चेद्, अहो बतायमाम्नायविश्वासतपस्विता तान्त्रिकहतकस्य । न खलु पर्यङ्कविद्यादहरविद्योपकोसलविद्येत्यादिसगुणविद्याविषयादन्यत्र निर्गुणविद्याविषये तदाम्नानमस्ति । 'वाङ् मनसि सम्पद्यते' इत्यादिना च विदुषः प्राणानां विलयक्रम एवाविद्वत्साधारण्येनोच्यताम् । 'समाना चासृत्युपक्रमात् —' (ब्र० ४. २. ७) इति न्यायात् । तत्र मनोवागादिक्रमेण करणसम्पिण्डमये लिङ्गे सहोपष्टम्भकभूतमात्राभिः परमात्मनि सम्पन्ने तदनुगतश्चेदात्मा सत्याभिसन्धो निरवद्यं ब्रह्म सम्पद्येत, तस्य प्रहीणक्लेशकर्माशयस्य प्राणास्तत्रैव गगने मेघविलयं विलीयन्ते । 'अस्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते *चासां नामरूपे पुरुष इत्येवं प्रोच्यते स² एषोऽकलोऽमृतो भवती'त्यादिश्रवणात् । अन्यस्य पुनरविद्याशयावशेषा सम्पत्तिरिति स यथाकर्म यथाविद्यं हृदयाग्रप्रद्योतेन चक्षुरादिद्वारा सप्राण एवोत्क्रामति । सगुणब्रह्मविदस्तूत्क्रान्तिः शताधिकया मूर्धन्यनाड्यार्चिरादिका गतिश्च स्यादित्येष विशेषः । 'चक्षुषो वा मूर्ध्नो वे'त्यविद्वद्विषये नाड्य-

1. 'रादिति श' ख. पाठः. 2. 'वो स' ण. पाठः.

* 'तासाम्' इति मुद्रितप्रश्नोपनिषत्पाठः.

न्तराभिप्रायोपपत्तेः। कथं पुनरविशिष्टे 'तेजः परस्यां देवतायामि'त्याम्नाने सम्पत्तिः सावशेषा निरवशेषा चेति विभागः। अपिच 'वाङ् मनसि सम्पद्यते' इत्यस्यैवानुषङ्गादभिधानवैरूप्ये मानाभावाद् वागादेरन्यत्रेव परदेवतायामपि पृथग्व्यवहारानर्हसंसर्गमात्रमेव सम्पत्तिरिति युक्तमुपगन्तुमिति चेत्। न। प्रयोजनवशेनार्थविभागकल्पनोपपत्तेः। न हि ब्रह्मप्रकरणे 'अस्य प्रयतो वाङ् मनसी'त्यादि विद्वदविद्वदविशेषेणोत्क्रान्तिप्रतिपादनपरमेव, येन तदर्थैकरूप्यं नियम्येत। किन्तु स्वाप्ययवाक्यवद् यत्र परस्यां देवतायां सम्पद्यते 'स एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत् त्वमसी'त्ये'वम्परम्। तत्रातत्परे वाक्ये विनियोगभेदेन मन्त्रेष्विव यथायोगमर्थविभागो न विरुध्यते।

अपिच 'वाङ् मनसि दर्शनात् —' (ब्र० ४. २. १) इत्यारभ्य 'भूतेषु तच्छ्रुतेः' (ब्र० ४. २. ५) इत्यन्तैरधिकरणैः 'प्राणस्तेजसी'त्यन्तमुपपाद्य प्राप्तावसरमपि 'तेजः परस्यां देवतायामि'त्येतदवस्थाप्यान्तराले 'समाना चासृत्युपक्रमात् —' (ब्र० ४. २. ७) इति सूत्रयतो भगवतो बादरायणस्य सृतेरुपक्रम आदिः पूर्वभाविनी परदेवतासम्पत्तिः आ ततः समाना विदुषोऽविदुषश्च वागादिसम्पत्तिः, तत्र तु सावशेषत्वनिरवशेषत्वविशेषोऽस्तीत्यभिप्रायो गम्यते। अन्यथादावन्ते वा समानत्ववचनं न्याय्यम्। न च पूर्वत्रैवासमानत्वविप्रतिपत्तिः न परदेवतासम्पत्ताविति ततः प्रागेव समानत्वं सूत्रितमिति वाच्यम्। तत्रापि परंज्योतिरुपसम्पत्तिर्विदुष एव नाविदुष इत्यसमानत्वविप्रतिपत्तिसम्भवात्। न चेह विदुष एव प्रयतः सम्पत्तिक्रमश्चिन्त्य इति तस्य तत्सिद्धावविदुषि विप्रतिपत्तिरनपेक्ष्येति वाच्यम्। तव आनाडीनिष्क्रमणाद् विद्वदविद्वत्सामान्याभ्युपगमेनाविदुषोऽपि तच्चिन्तावश्यम्भावात्, सावशेषत्वनिरवशेषत्वविप्रतिपत्तेश्च। तस्मादेष परदेवतासम्पत्तौ विशेषो मत इति प्रागतः समानत्वमसूत्रयदिति युक्तम्। तं च विशेषमसूत्रयत् 'तदापीतेः संसारव्यपदेशात्' (ब्र० ४. २. ८) इति 'तानि परे तथा ह्याह' (ब्र० ४. २. १५) इति च। न चात्राप्रयोजनतया परदेवतासम्पत्तिर्नोपपद्यत इति पक्षः प्रतिक्षिप्यते, 'तेजः परस्यां देवतायामि'त्याम्नाने सति सुप्ताविवायासविश्रान्तिफ-

---

१. 'रस' ख. पाठः.

लस्य न्यायप्राप्तत्वात् । तदाम्नानं सर्वदा सर्वाधारत्वमात्रपरं नीयत इति न शक्यशङ्कं, सम्पद्यत इत्यनुषक्ताभिधानवैरूप्यायोगस्य तत्र 'अविभागो वचनात्' (ब्र० ४. २. १६) इत्यत्र सिद्धत्वात् । तस्मान्निर्विशेषं विदुषो निरवशेषं प्राणादीनि परमात्मनि लीयन्ते । तथा ह्याह 'भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते' इति ॥

---

## ब्रह्मणि कलाविलये श्रुत्याद्यविरोधः ।

यत्तु — ब्रह्मण्येव कलाविलयसमर्थनं श्रुतिविरुद्धं प्रत्यक्षविरुद्धं चेति । तत्र प्रत्यक्षं तावन्न विरुध्यते प्राणादिकलानामतीन्द्रियत्वात् ।

"गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥"

इत्यादिश्रुतिश्चोदासीनदशा लयः स्वयोनिषु कार्यस्येत्यौत्सर्गिकन्यायदृष्टिमनुमत्य ब्रह्मण्येव लयप्रतिपादनपरा न विरुध्यते । न हि 'परेऽव्यये सर्वएकीभवन्ती'ति सङ्घातापत्तिरुच्यते, जीवो हि सकरणग्रामः सप्राणो भूतसूक्ष्मसङ्गतः संहत एव । तेजः परस्यां देवतायां सम्पद्यत इत्याम्नायते । स्वस्वयोनिविलये कलानामात्मनि संहननायोगाच्च । तस्माद् मुक्तदशा सर्वमात्मैवाभूदिति परे सर्व एकीभवन्तीति वचनं युक्तम् ।

यदपि निरवशेषविलयो नाम न तदवयवविनाशः, 'तदेतदक्षयं नित्यं जगदि'त्यादिविरोधात् । न पृथिवीत्वादिहानं, प्रत्यक्षविरोधात् । तस्य प्राकृतप्रलयदशाभावित्वाच्च । 'नासदासीन्नो सदासीदि'त्यादिश्रुतेः, 'नाहो न रात्रिर्न नभो न भूमिः' इत्यादिस्मृतेश्च । न देहारम्भायोग्यत्वं, मुक्तस्यानावृत्तिन्यायादेव देहारम्भशङ्कासम्भवेनाविचार्यत्वात् । अमुक्तदेहारम्भायोग्यत्वस्य नियन्तुमशक्यत्वादित्यादि ।

तदसारम् । प्रलयादाविव वियदादेर्व्यासङ्गादाविव रङ्गरजतादेरबीजशक्तिबीजशक्तिशेषत्वस्य विवक्षितत्वात् । अक्षयमित्यादेश्चाधिष्ठानसत्ताविषयत्वाभिधानादविद्यया संसरति विद्यया मुच्यत इतीयत्येव शास्त्रार्थे मुक्तामुक्तभेदस्याविद्यामात्रत्वेन देहाद्यारम्भानारम्भविवादस्य निर्विषयत्वात् । बोध्यबुद्ध्यवताराय परं क्वचिदागमेषु मुक्तामुक्तविभागवादः । तथा च 'तद् यो यो देवानामप्रत्य-

बुध्यत स एव तदभवदि'त्यादि व्याख्यातम्। 'अनावृत्तिः शब्दात्' (ब्र० ४. ४. २२) इति च ब्राह्मलौकिकस्यानावृत्तिरुपपाद्यते ततो मोक्ष्यत इति। तस्य चान्यस्य च निर्विशेषविद्यया बोध्यबुद्ध्यनुरोधेनैव कलाप्रलय इह प्रतिपादनीय इत्युपपन्नम्।

यत्तु निर्विशेषविद्यैव न प्रामाणिकीति, तद् वेदबाह्येनात्मद्रुहा शङ्कितं वदितुं, न त्वौपनिषदैरिति।

ननु काठके 'अन्यत्र धर्मादि'ति निर्गुणविद्यां प्रकृत्य 'शतं चैका च हृदयस्य नाड्यः' इत्याद्याम्नायत इति चेत्। न। सामर्थ्यविरोधेनाफलतया चोत्क्रमणादेः प्रकरणनिवेशायोगेन द्वादशोपसत्तादिवदुत्कर्षोपपत्तेः। तथा च दहरविद्यायामुपसंहृतम्, अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति प्रक्रम्य 'तदेष श्लोको भवति शतं चैका च हृदयस्य नाड्यः' इत्यादि। अन्यथा 'विष्वङ्ङन्या उत्क्रमणे भवन्ती'त्यपि ब्रह्मविद्याविषयमेव स्यात्, प्रकरणाविशेषात्। उपवीतविधेरिव निवीतादिरमृतत्वाय मूर्धन्यनाड्युत्क्रमणविधेरेषोऽर्थवाद इति चेत्। सर्वोऽयं निर्गुणविद्यार्थवादो भवतु, इत्थं महाभागेयमात्मविद्या यदुत गुणारोपेणोपासनमप्यापि तया मूर्धन्यनाड्योत्क्रम्यामृतत्वं यन्तीति। अथवा

"प्रते ब्रवीमि तदुमे निबोध स्वर्ग्यमग्निं नचिकेतः! प्रजानन्"

इत्यादिप्रस्तुताग्निविद्याविधिशेष एष फलवादः स्यात्,

"यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः"

इति न्यायात्। अत एव 'दीक्षितो न ददाति' इत्यादि व्यवहितमपि पर्युदासवृत्त्या पुरुषार्थदानहोमादिविधिशेष इति सूत्रितं जैमिनिना *'अपि तु वाक्यशेषः स्यात् प्रतिषेधे विकल्पः स्यात्' (जै० १०. ८. १५) इति। अथ सगुणविद्यायामपि 'सर्वे पाप्मानोऽतो निवर्तन्ते', 'अस्य सर्वे पाप्मानः प्रदूयन्ते', 'य एतदेवं विद्वान् तत् सुकृतदुष्कृते विधूनुते' इति सामर्थ्यविरोधात्,

१. 'त्याम्ना' ख. पाठः.

* 'अपितु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति मुद्रितजैमिनीयसूत्रपाठः।

साधनैकरूप्ये ब्राह्मलौकिकफलवैरूप्यविरोधाच्च निर्विषयमुत्क्रमणादिशास्त्रमापन्नमिति चेत् । न । विद्याकर्मसमुच्चयसाधनभावोपगमने सुकृतादिहानस्य तदितरविषयतया सामर्थ्याविरोधाद्, अन्यदेव लिङ्गस्य कर्मायत्तस्थितिकत्वानुमानाच्च । 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इत्यादिश्रुतेराविर्भूतसत्यसङ्कल्पादिगुणसाम्येऽपि समुच्चेयकर्मभिरुपासनावृत्त्या च धर्मतारतम्योपपत्त्या तत्र फलवैरूप्याविरोधाच्च । अत एव फलवती तत्र गतिरुत्क्रान्तिश्च, देशविशेषापेक्षया भोगविज्ञानोपपत्तेः । एवमुत्क्रमणादेः सगुणविद्याविषयत्वे सति

"अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"

इत्यादिनाधिकोपक्षेपेण व्यवहितविषयं गौणविषयं वाश्रयितव्य, निर्गुणविद्यया तत्रैव ब्रह्मभूयोपपत्तेः । जीवभावादिसकलसंसारस्याप्यविद्यामात्रत्वात् । 'उपमर्दं च' (ब्र० ३. ४. १६) इति हि सूत्रितम् । अत एव 'परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति', 'विद्वान् नामरूपाद् विमुक्तः', 'विद्वान् पुण्यपापे विधूय निरञ्जनः' इत्यादाव्यवधानमौत्सर्गिकमनुगृहीतं भवति । विद्याभेदेन व्यवस्थासम्भवेऽर्चिरादिगत्या ब्रह्मलोके इत्यनुपसंहरणीयत्वात् । सामर्थ्येन ब्रह्मविद्याविनियुक्तानां कलानां विलयवचनस्य प्रतिपत्तिवादमात्रस्यातत्परतया विद्याबाध्यत्वाविरोधाच्च । स खल्वयं विद्वान् विद्यासमसमयविलुप्तसमस्तबन्धोऽपि प्रारब्धवेगेन यावत्तदवधिबाधितानुवृत्त्यैव व्यवहरतीव, 'तस्य तावदेव चिरं', 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतेः । प्रवृत्तेषुवेगादिनिदर्शनोपपत्तेर्विद्वदनुभवाच्च । अत एव स्वप्नेषु वेगानुवृत्तिरिव प्रबोधे कर्मवेगानुवृत्तिरयुक्तेति निरस्तम् । न हि दृष्टेऽनुपपन्नं नामेति । उपपादिता चैषा जीवन्मुक्तिरधस्तात् ॥

---

## विदुष उत्क्रान्तिगत्यादिनिषेधसमर्थनम् ।

विदुष उत्क्रान्तिप्रतिषेधाच्च । न च शारीरादयं प्रतिषेधः, 'काममय एवायं पुरुषः' इति प्रक्रम्य 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति', 'तस्यैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रा-

मति चक्षुष्टो वा' इत्यादिनोत्क्रान्तिम्, 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा' इत्यादिना पुनर्देहसम्बन्धं, 'प्राप्यान्तं कर्मणस्तस्य, तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति गतागतं चाभिधाय, 'इति नु कामयमानः' इत्यविद्वद्विषयमुपसंहृत्य 'अथाकामयमानः' इत्यादिना विदुषोऽतथात्वे विवक्षिते यथाप्राप्तविशिष्टोत्क्रमणादिनिषेधावगत्यौचित्यात्। अन्यथा शरीरादुत्क्रान्तिरनुत्क्रान्तिश्च शारीरादुभयोरविशिष्टेति प्रक्रमभेदासामञ्जस्यात्। ब्रह्माप्ययतदभावमात्रविशेषेऽपि 'न तस्मात् प्राणा उत्क्रामन्ती'ति वचनानर्थक्यात्। विदुषोऽप्युत्क्रान्तौ 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्य'स्य विशेषादात्मापादानतदुत्क्रान्त्यप्रसङ्गात्। न च देहवियोगकाल एव ब्रह्मसम्पत्त्यवधारणात् तत्प्रसङ्गः, 'यावन्न विमोक्ष्ये' इति सामान्यवचनस्य भोगाभावेऽपि लोकभेदे ब्रह्मसम्पत्त्या लिङ्गभङ्गादिति विवक्षोत्पत्तेः। 'अत्र ब्रह्म समश्नुते' इत्यतोऽपि न प्रसङ्गः, अनुपोष्यामृतत्वविषयत्वोपगमात्। अथापि व्यवहितवाक्यान्तरालोचनया भोक्तव्याभावालोचनया वा सा यावत् प्रसज्यते तावत् सन्निहिताविद्वदुत्क्रमणापादानस्य शरीरदेशस्य तदा परामर्शप्राशुभावाद् 'योऽकाम' इति स्ववाक्यसन्निहितस्यापि शारीरस्य प्रथममप्रसक्तिहेतुत्वेन परामर्शयोग्यत्वात्।

अपिच देहवियोगसमकालमेव प्राणवियोगशङ्कायां तस्य प्राणा उत्क्रामन्तीत्येव वचनवृत्तिर्युक्ता, न तु 'न तस्मात् प्राणा उत्क्रामन्ती'ति वरणपरिभ्रमणेन गोपुरप्रवेशन्यायानुसरणम्, उत्क्रान्तिशब्दस्य वियोगवृत्तित्वाभावात्। तत्र यद्यपि चक्षुरादयोऽपादानभेदाः प्रसक्ताः, तथाप्यवयवभेदेनापि शरीरादेवोत्क्रान्तिरिति कृत्वा तस्मादित्येकवचनमुपपन्नम्। चक्षुरादेरुत्क्रान्त्यपादानस्य व्यवस्थितविकल्पतया तस्य तस्यैकत्वाच्च। नन्वेवं 'योऽकाम' इति साकाङ्क्षं स्यात्, तत्पदस्य भिन्नविषयत्वात्। न। यथालौकिकदेहात्माभेदेन यत्तदोरैकार्थ्योपपत्तेः। अथवा प्रकरणरूपभेदेनेतरत्रेतरत्र च तस्येति तस्मादिति च श्रुतस्येतरेतरत्रोपसंहारे नैराकाङ्क्ष्यमुपपन्नम्। एतेन सम्बन्धसामान्यषष्ठी पञ्चमीपाठनिश्चितापादानविषया नेयेति निरस्तम्। अर्थपुष्ट्ये तयोरितरेतरत्रोपसंहार्यत्वात्, प्राप्तशरीरापादानत्वैकार्थ्यानपवादाच्च।

---

१. 'तदुभयमा', २. 'पा' ख. पाठः.

अत एव यदि विदुषः शरीरादुत्क्रान्तिर्न निषिध्येत 'उदस्मात् प्राणाः क्रामन्ति', 'नेति होवाचे'त्यविदुषः शरीरादुत्क्रान्तिरप्रसक्ता निषिध्येतेति प्रत्युक्तम्, परत्र प्रसङ्गायेव शारीरादुत्क्रान्तिनिषेधो विदुषोऽनुपपद्यमानोऽप्यवगन्तव्य इत्यशक्यत्वात्, तत्राविदुषः शारीरादुत्क्रान्तिनिषेधानिष्टेश्च । किन्तु विदुष एवायमपि शरीरादुत्क्रान्तिनिषेधः स्याद्, अस्मादिति कथञ्चित् प्रकृतशरीरावमर्शोपपत्तेः ।

न चात्र विदुषोऽप्रसङ्गः, 'यदिदं सर्वं मृत्योरन्नं का स्वित् सा देवता यस्या मृत्युरन्नमि'ति मृत्युमृत्योरात्मविद्याया विषयद्वारा पृष्टत्वात्, तत्र च मृत्युमृत्योः सदसत्त्वाभ्यामनवस्थानिर्मोक्षाशङ्कया प्रश्ने मा भूदनिर्मोक्ष इति मृत्युमृत्युसत्त्वमात्रे दृष्टान्तोऽयमुच्यते 'अग्निर्वै मृत्युः सोऽपामन्नमि'ति । न चायं परिच्छेदाभिमानासङ्गलक्षणमृत्युनिवृत्त्युपायप्रश्ने दृष्टान्तः, तस्य 'होत्रर्त्विजे'त्यादिनोक्तोत्तरत्वेन 'कति ग्रहाः कत्यतिग्रहाः' इतीन्द्रियविषयात्मकबन्धरूपमृत्युप्रश्नव्यवधानेन च 'यदिदं सर्वं मृत्योरन्नमि'त्यादिप्रश्नस्य सन्निहितबन्धरूपमृत्योरपेक्षितनिवृत्त्युपायपरत्वे सम्भवत्यनपेक्षितव्यवहितविषयत्वकल्पनायोगात् । तत्रैव दृष्टान्तेन बन्धमृत्युजयोपायसत्त्वे कथिते 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यादिदर्शनेन सामर्थ्याद् ब्रह्मविद्याफलम् 'अप पुनर्मृत्युं जयती'त्युच्यत इति युक्तम् । न ह्यत्रापामग्न्यन्नत्वेनोपासनविधिः श्रूयते । न च कल्पनाहेतुरस्ति, येन तत्फलमग्निजयोऽनेनोच्यत इति कल्प्येत । न च मृत्युमृत्योरपि मृत्य्वन्तरापेक्षयानवस्था ।

"अज्ञानमृत्युर्विज्ञानं मृत्युः स्वस्यापि तत् तथा ।
तत् कातकरजोन्यायात्"

इति ह्युक्तम् । तदेवं प्रकृतस्य विदुषः शरीरादुत्क्रान्तिनिषेधो युक्तः । विदुषः प्राणा यद्युत्क्रामेयुः, अविदुषो न विशेषः । यदि न, जीवतो न विशेष इति प्रश्नबीजसम्भवात् । अत एवोत्क्रान्तिनिषेधे जीवत्ता मा शङ्कीति अत्रैव समवनीयन्ते तप्तायस्यब्बिन्दव इवेति विलयप्रतिपादनमर्थवत् । 'स उच्छ्वयती'त्यादि च प्रकृतविषयं स्यात् । परोक्षनिर्देशस्तु अस्मात् प्राणा

१. 'ह्वायाः प्र' ण. पाठः.

नोत्क्रामन्ति अत्रैव समवनीयन्ते इति गुणभावेन व्यवहितत्वात् । शारीरादिति तु प्रतिपत्तौ न प्रश्नबीजसम्भवः । आर्थे च शारीरसंसर्गे अत्रैव समवनीयन्त इत्यनर्थकम् । यत्तु — उत्तरसन्दर्भादविद्वद्विषयत्वमिति । तन्न । तस्यैव तद्विषयत्वात् । अन्यथा 'यत्रायं पुरुषो म्रियते किमेनं न जहाति नामे'ति मुक्तस्य परवाङ्निर्वर्त्यनाममात्रशेषत्वोक्तिविरोधात् । सापि परदृशैव, परिद्रष्टुरिमाः षोडशकलाः पुरुषं प्राप्यास्तं गच्छन्तीति प्राणादिनामान्तकालाप्रलयश्रवणात् । अत एव विदुषः शारीरादुत्क्रान्तिनिषेधादविदुषः प्रसक्ता सेह निषिध्यत इति स्वप्नायमानस्य प्रलापः । सर्वत्र विदुष एव शरीरादुत्क्रान्तिनिषेधात् । तथाच स्मृतिः —

"सर्वभूतात्मभूतस्य सम्यग् भूतानि पश्यतः
देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥"

इति । यदि हि विदुष उत्क्रान्तिरर्चिरादिका गतिश्च स्यात्, तन्मार्गमातिवाहिका देवा विजानीयुरिति 'मार्गे देवा मुह्यन्ती'ति न सङ्गच्छेत । शुकस्य तु योगप्रभावेन सशरीरस्यैव गतिर्व्याख्याता, भो इति प्रतिश्रावणसर्वभूतदृश्यत्वादिलिङ्गात् । अत एव भूतैर्देहसङ्घातभूतैः समातिवाह्यत इत्युच्यते, आतिवाहिकदेवेषु भूतशब्दाप्रसिद्धेः । 'दृष्टो मार्गः प्रवृत्तोऽस्मी'ति च योगप्रभावं दिदर्शयिषोस्तदुपयोगिमार्गदर्शनविस्मयानुवादः,

"शुकस्तु मारुताच्छीघ्रं गतिं कृत्वान्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥"

इति लिङ्गात् ।

यत्तु —

"तीर्त्वा तु दुस्तरं जन्म विशन्ति विमलं नभः ।
ततस्तान् सुकृतीन् साङ्ख्यान् सूर्यो वहति रश्मिभिः ॥
पद्मतन्तुवदाविश्य प्रवहन् विषयान् नृप ! ।
तत्र तान् प्रवहो वायुः प्रतिगृह्णाति भारत ! ॥
वीतरागान् यतीन् सिद्धान् योगयुक्तांस्तपोधनान् ।
सूक्ष्मः शीतः सुगन्धिः स सुखस्पर्शश्च भारत ! ॥

सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यः शुभान् ।
स तान् वहति कौन्तेय! तमसः परमां गतिम् ॥
तमो वहति लोकेश! रजसः परमां गतिम् ।
रजो वहति राजेन्द्र! सत्त्वतः प मां गतिम् ॥
सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥
परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चापि भोः ॥
परमा सा गतिः पार्थ! निर्द्वन्द्वानां यतात्मनाम् ॥"

इत्यादिगतिरभिधीयते मोक्षधर्म एवेति । तत् साङ्ख्यपक्षानुवादत्वाद् नैगमार्चिरादिगतिपर्वक्रमविरोधाच्चानपेक्षणीयम् । तस्मादुत्क्रान्तिगत्यादिवचनानि सर्वशो विद्याप्रकरणे सगुणविद्याविषयाणि विनेतव्यानि ॥

---

**स एनान् ब्रह्म गमयतीतिश्रुतेः सगुणब्रह्मपरत्वम् ।**

किं पुनरिदमुच्यते तत्पुरुषोऽमानवः स एनानर्चिरादिपथिकान् ब्रह्म गमयतीति । अपरं ब्रह्मेति चेत्, परमुपासीनानपरं गमयतीति विप्रतिषिद्धम् । तत्क्रतुन्यायविरोधात् । उच्यते — परमेवाप्रतिहतैश्वरभावाहिरण्यगर्भावस्थं स्वप्राधान्येन व्यपदिश्यते 'स एनान् ब्रह्म गमयती'ति, ब्रह्मशब्दस्य तत्र मुख्यत्वात् । गुणमयस्यापि परस्य तदात्मनैव लोकविशेषसम्बन्धनियतदिव्यमङ्गलविग्रहोपपत्तेः । पर्यङ्कविद्यायां हि 'स प्रजापतिलोकमागच्छति[1] स ब्रह्मलोकमागच्छती'ति वैराजलोकादनन्तरं हिरण्यगर्भलोको ह्रदादिविशेषैरुपवर्ण्यते, पर्यङ्कशयं च ब्रह्म । न च तत्राहत्यैव परमुच्यते

"शक्रः सेमेस्तदवभ्यस्ततश्चापि प्रजापतिः ।
हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः ॥"

इत्यादिस्थानसामान्येन प्रजापतेरनन्तरस्य ब्रह्मणो हिरण्यगर्भत्वावगमात् । तथा च दहरविद्यायाम् 'अरश्च ह वैण्यश्चार्णवौ' इत्यादिवर्ण्यमानो ब्रह्मलोकस्तद-

---

१. 'तीति वै' ख. पाठः.

नन्य इति युक्तम् । तस्यैव संस्थानभेदेन वर्णकभेदोपपत्तेः । तमतिक्रम्य विद्याप्राप्यलोकविशेषसत्त्वे मानाभावात् । तदेतदभिसन्धायाह 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र० ४. ३. ७) इति । अन्यथा 'तस्मिन् वसति शाश्वतीः समाः, तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती'ति कालमर्यादावचनविरोधात् । पराशब्दो हि परिमितकालवाची,

"निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् ।
तत् पराख्यं तदर्धं च परार्धमिति गीयते ॥"

इति स्मृतेः । न च परमात्मनि कालसङ्ख्यानमवकल्पते, 'यस्मादर्वाक् संवत्सरोऽहोभिः परिबर्तते' इत्यादिश्रुतेः । किमेवं यथा चन्द्रमसं प्राप्य कार्मिणस्तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमेवं ब्रह्मविदोऽपि ब्रह्मलोकान्निवर्तन्ताम् । निवर्तन्तामावर्तान्तरे 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते', 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्ति'रिति इममिहशब्दोपादानात् । न चानुशयाभावानावृत्तिः, विशेषणबलाक्षिप्तायामावर्तान्तरावृत्तौ प्रामाणिक्यां तदनुगुणानुशयस्य कियतोऽपि कल्पनीयत्वाद्, ब्रह्मलोकेऽपि सलिङ्गस्य कियतोऽपि प्रियाप्रियसंस्पर्शस्यानुशयमूलत्वाच्च । तथाचैतिहासिकं लिङ्गं

"भगवन्! ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः ।
कस्येयं कर्मणः पक्तिः क्षुत्पिपासावशोऽस्मि यत् ॥"

इति । न चावाचीनोऽयमन्यो ब्रह्मलोक इति वाच्यम् ।

"स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥"

इति क्षुदादिविवर्जितत्वाविशेषणेन प्रत्यभिज्ञानात् ।
अपिच

"दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः"

इति ब्रुवता मुक्तस्यापि दास्यं पारतन्त्र्यमुपेयते । तच्च नियाम्यत्वं दुःखं,

"सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्"

इति स्मृतेः । दुःखं च नर्ते कर्माशयाद् भवति । न च दास्यं स्वाभाविकं दुःखं च, 'स स्वराड् भवति' इति श्रुतिविरोधात् । लाघवादनन्यवश्यत्वस्य तदर्थत्वे सम्भवति कर्मवश्यत्वाभावविषयसङ्कोचायोगात् । महद् भयं ब्रह्मेति

तन्नियाम्यस्येन्द्रमृत्य्वादेरिव तच्छासनातिक्रमभयस्यापरिहार्यतया 'विद्वान् न बिभेति कुतश्च न, इत्यादिविरोधात् । न च सशरीरत्वेन

"भयादस्याग्निस्तपति भयात् तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥"

तपनादिकार्यान्वयेन भयस्य नियाम्यत्वैकोपाधित्वावगमाद् गुणवत्प्रियतमराजराजदासस्यापि तद्भूयाभिलाषदर्शनेन पाराधीन्यमात्रस्य दुःखत्वोन्नयनात्, तन्निमित्तानुशयस्यावर्जनीयत्वात् । न चाश्रितवात्सल्यैकजलधिः परमकारुणिकोऽत्यर्थप्रियं ज्ञानिनमात्मभूतं कदापि न निवर्तयेदिति वाच्यम् । यदि हि

आवृत्तिमागमो ब्रूयादीश्वरः किं करिष्यति ॥

---

## अनावृत्तिश्रुतिविचारः ।

स्यादेतत् । वेदस्य नित्यस्यानित्यसंयोगविरोधेन व्यक्तिपरत्वाभावादिममिहेति सन्निहितमात्रावलम्बनाविति कल्पान्तरेऽपि तत एवावृत्तिनिषेधो गम्यते । अन्यथा 'यतो वा इमानि भूतानि जायन्ते', 'इदं सर्वं यदयमात्मे'त्यादावपि तथैव विशेषणबलेन कल्पान्तरे जगज्जन्मादिकारणमन्यदेव कल्प्येतेति । नैवं, प्रतिपद्यमानसन्नियोगेन विशेषणस्य यदावर्तवर्तिनो ब्रह्मलोकं प्रतिपद्यन्ते तदावर्तं नावर्तन्त इति पर्यवसितेऽर्थलभ्याया आवर्तान्तरे पुनरावृत्तेरनिवार्यत्वात् । यदि ह्येतेन प्रतिपद्येमं नावर्तन्त इत्युच्येत, अनावृत्तिरेव केवलं प्रतीयेत, प्रतिपत्तृविशेषानवगमेन निषेधाम्नानतौल्यात् । प्रतिपद्यमाना इति तु तत्तदावर्ते वर्तमानप्रत्ययेन प्रतिपत्तृविशेषमादायेममिति विशेषणं तेषां तेषां तत्तदावर्तानावृत्तिमेव दर्शयतीति गम्यते । यथा मृष्टेन तृप्यन्त इदमहर्न बुभुक्षन्ते इत्यहरन्तरे तेषां बुभुक्षा न निषिध्यते, तद्वत् । न च 'यतो वा इमानी'त्यादावीदृगुपसर्ग इत्याम्नाननित्यतया कल्पावृत्तावपि ब्रह्मैव जगत्कारणं गम्यत इति विशेषः । एतेन 'पुनरावृत्तिस्तेषामिह न विद्यते' इति सविशेषणा स्मृतिरपि व्याख्याता । यत्रापि निरङ्कुशमनावृत्तिः श्रूयते 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते' इत्यादौ, तत्रापीमं मानवमित्युपसंहरिष्यते, सर्वशाखाप्रत्ययन्यायात् ।

अथवा 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र० १. ३. २६) इति न्यायात् 'छायातपयोरिव ब्रह्मलोके', 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुच्यते स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' इति श्रुतेश्च ब्रह्मलोक एव निर्विशेषब्रह्मात्मतत्त्वविदां 'ते ब्रह्मलोके तु परान्तकाले परामृतात्', 'ब्रह्मणा सह ते सर्वे' इत्यादिश्रुतिस्मृतिदर्शनात् कार्यात्यये तदध्यक्षेण सह परममुक्तौ सर्वदैवापुनरावृत्तिरुच्यते 'तेषां न पुनरावृत्तिरित्यादौ। तत्र भोगमात्रेण प्रसिताः पुनरिममेव मानवमावर्तं नावर्तन्ते पञ्चाग्निविदो ब्रह्मलोककामनया प्रव्रजन्त इत्येवमादय इत्यातिष्ठामहे। य एवमेतद् विदुः ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति। ततो मुच्यन्ति निवर्तन्ते वा, ये चेमे अरण्ये श्रद्धां सत्यमुपासते तेषां न पुनरावृत्तिरिति वाक्यभेदोपपत्तेः। अन्यथा विरोधात्। 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्यादिपरविद्याविषयेऽनन्वयाद् 'इमं मानवमावर्तं नावर्तन्ते' इति विशेषणमन्यार्थमर्चिरादिगतिसाधारण्यादुपात्तमवयुत्यानुवादो व्यवस्थास्यते। एवञ्च आभूतसंप्लवस्थानाभिप्रायं 'तयोर्ध्वमायन्नमृतत्वमेती'ति,

"षड्गुणेन तपोलोकात् सत्यलोको विराजते।
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः॥"

इत्युक्त्वा अन्यत्र

"अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम्।
उदक्पन्थानमर्यम्णः स्थिता ह्या भूतसम्प्लवात्॥"
इत्येतैः कारणैः सिद्धास्तेऽमृतत्वं हि भेजिरे।
आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते॥
त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते।"

इति स्मरणात्। न च 'अकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी'ति ब्रह्मणो लोक उच्यते, कर्मधारयस्याभ्यर्हितत्वात्। एवं सत्येवाकृतत्वविशेषणाञ्जस्यात्। लोकभेदे च

"जनस्तपस्तथा सत्यमिति चाकृतकत्रयम्"

इत्यादिवदाभूतसम्प्लवादुदयापायाभावमात्रेण तदनाञ्जस्यादिति । क्रममुक्त्यभिप्रायं वा 'तयोर्ध्वमायन्नमृतत्वमेती'ति । अन्यथा पञ्चाग्निविदामपि ब्रह्मलोकफलमूर्धन्यनाड्युत्क्रमणोपक्रमार्चिरादिगत्याम्नानाविशेषेण ब्रह्मविदामिव परामृतत्वप्रसङ्गः, 'नान्यः पन्था' इत्यादिविरोधश्च स्यात् ॥

---

## पञ्चाग्निविदामब्रह्मवित्त्वम् ।

यत्त्वत्राह — 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति भूतान्तरसंसृष्टानामपामेव 'तद् य इह रमणीयचरणा रमणीयां योनिमि'त्यादिश्रुतकर्मनिमित्तमनुष्यादिभावः। आत्मा त्वविकृत इति चिदचिद्विवेकं प्रतिपाद्य 'तद् य इत्थं विदुरि'त्युपादानादचिद्वियुक्तमात्मानं ब्रह्मात्मकमुपासीना गृह्यन्ते। तेषामेव तत्क्रतुन्यायेन ब्रह्मसम्पत्त्यपुनरावृत्त्युपपत्तेरिति ।

तन्न । 'असौ वाव लोको गौतमाग्निरि'त्यादिकल्पनावैयर्थ्यप्रसङ्गात् । लोकादिष्वग्न्यादिकल्पनाप्रधाने च प्रकरणे प्रकृतिवियुक्तप्रत्यगात्मोपासनविधेः कल्पनीयत्वात्, 'तद् य इत्थं विदुरि'ति परामर्शानुपपत्तेः, कल्पकाभावाच्च । ब्रह्मप्राप्त्यपुनरावृत्तिश्रुतिर्हि ब्रह्मविद्विषयापि स्यात् । यदि वा अप्रतीकालम्बनानब्रह्मक्रतूनपि पञ्चाग्निविदोऽर्चिरादिपथिकान् अमानवो ब्रह्म गमयतीति स्यात्। 'य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती'त्यादिप्रत्यक्षोपदेशे न्यायानवतारात्। 'किमिव हि वचनं न कुर्यात्', 'नास्ति वचनस्यातिभारः' इति हि नीतिविदः । अन्यथा अश्रुताध्याहारेणापि ब्रह्मात्मकतया प्रत्यगात्मक्रतोरपि ब्रह्मक्रतुत्वाभावेनामानवब्रह्मगमनानुपपत्तेः । अस्यापि ब्रह्मक्रतुत्वे 'तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यादिविभागाम्नानायोगात् । अपिच परब्रह्मोपासनस्य ब्रह्मात्मकात्मोपासनस्य च समुच्चये विकल्पे वा 'तमेव विदित्वातिमृत्युमेति नान्यः पन्थाः' इत्यादिविरोधः, वाक्यान्वयनयाद्यानर्थक्यं चेति । तस्मादिह वा ब्रह्मलोके वा निर्विशेषात्मविद्यया प्रमाणमय्या तदैव प्रकाशानन्दसत्तामात्रपरिशेषात्मस्वरूपप्रतिष्ठाकैवल्यमेव परामृतत्वमिति युक्तमौपनिषदैरुपगन्तुमिति ॥

---

## ब्रह्मविद्यासाध्यविमर्शः ।

हन्त किं पुनरेवं ब्रह्मविद्यया साध्यताम् । अविद्याद्यनर्थनिवृत्तिरिति चेत्, सा यदि ब्रह्मस्वरूपादतिरिच्येत, अद्वैतकैवल्यवादविरोधः । अपिच न सा कैवल्येनावभासते, भासकाव्यवधानात् । भासमाना च न स्वरूपेण, अविशेषिताया निवृत्तेस्तुच्छत्वात् । प्रतियोग्यवभासे चानन्तविकल्पानुवृत्तौ क्व कैवल्यम् । अपिच सा न नित्या, मृषानिरूप्यस्याधिष्ठानातिरिक्तस्य दृश्यस्य रज्जुसर्पविसर्पणादिवन्मृषात्वौचित्यात् । मृषात्वे च तस्याः सैव कल्पनामूलाविद्यानुवृत्तौ कैवल्यानुपपत्तिः ।

"न सन्नासन्नसदसन्नानिर्वाच्योऽपि तत्क्षयः।"

इति तस्याः पञ्चमप्रकारत्वमप्रामाणिकम् । दृश्यत्वेऽध्यासातिरिक्तदृक्सम्बन्धानिरूपणात्, सम्बन्धस्य च तत्प्रकारत्वकल्पनस्यामूलत्वात् । अथाविद्यादिनिवृत्तिरधिष्ठानस्वरूपमेव, प्रागेव सिद्धा सा न ज्ञानेन साध्येत । तथाच मुक्तावप्यनर्थोऽनुवर्तेत, स्वनिवृत्त्यविरोधित्वात् । विरोधित्वे वा प्रागपि तत्त्वज्ञानादनर्थो न स्यात् । नचाविद्यादेरपरः क्षणिकोऽसत्यो वा ध्वंस उपेयते, स एव प्रतियोगिविरोधी तत्त्वज्ञानसाध्य इति वाच्यम् । निवृत्तिकल्पनानुवृत्तावुक्तदोषात् । न च यस्मिन् सत्यग्रिमक्षणे सत्त्वमसति चासत्त्वं तत् तस्य साध्यम्, साध्यसाधनभावस्य नियतान्वयव्यतिरेकोपपाद्यत्वात् । अस्ति च तत्त्वज्ञाने सत्यग्रिमक्षणेऽनर्थनिवृत्तेरात्मरूपायाः सत्त्वम् । असति चानर्थरूपमेवासत्त्वमिति वाच्यम् । दिवो दण्डसाध्यत्वप्रसङ्गात् । अस्ति हि दण्डे सति दिवः सत्त्वम् । असति चासत्त्वं, तदभावस्य परेण देशकालाव्यतिरेकोपगमात् । नहीह पारिभाषिकं साध्यत्वं निर्विवक्षितं, येनेष्टापातः स्यात् । तत्त्वज्ञानप्रवृत्त्यङ्गं तु । न चेदं तथा, आकाशोद्देशेन दण्डादावप्रवृत्तेः । न च सिद्धत्वज्ञानं प्रतिबन्धकमसिद्धत्वज्ञानं कारणं वा कल्प्यत इति वाच्यम् । गौरवात् । ब्रह्मणोऽपि सिद्धत्वज्ञानात्, निर्विशेषस्य साध्यताप्रयोजकरूपान्तरानिरूपणाच्च । न च व्यतिरेके कादाचित्कमसत्त्वं विवक्षितमिति नातिप्रसङ्ग इति शङ्क्यं, सिद्धान्ते विरहैकस्वभावाभावानुपगमेनासति दण्डे क्षित्यादिरूपाकाशकादाचित्काभावसत्त्वात् । अपिचैवं किं नाम साधनमविद्यादिनिवृत्तौ न स्यात्, उदितान्वयव्यतिरेकमात्रस्य सर्वसुलभत्वात् । अतो यदभावे यस्यासत्त्वमेवेति नियमे वाच्ये तत्त्वज्ञानाभावेऽपि ब्रह्मणो भावान्न तत्साध्या तद्रूपान-

र्थनिवृत्तिरिति युक्तम् । नचैवमपि जलादौ रूपरसादेरितरेतरसाध्यत्वापत्तिः, यावद्द्रव्यभावितया सहोदयापायत्वेन तत्रोक्तनियमानतिक्रमादिति वाच्यम् । अग्रिमक्षण इति विशेषणात् । यौगपद्ये च रूपादेरन्यतरस्य पूर्वक्षणासत्त्वाभावेन तद्व्यावृत्तेः । न चैवं दुःखप्रागभावस्य प्रायश्चित्तासाध्यत्वापत्तिः । इष्टत्वात् । पापध्वंसस्यैव तत्साध्यत्वात् । तस्मिन् सति हेत्वभावेन दुःखानुत्पत्तेरसाधनीयत्वात् ।

अन्ये तु — साध्यत्वाभिमतप्रतियोग्यनुयोगिभावाश्रयप्रागभावविनाशकस्वस्वव्याप्येतरयावत्समवधाने यस्मिन् सत्यग्रिमक्षणे सत्त्वमित्यादि विवक्षितम् । साध्यत्वाभिमतघटादिप्रागभावो हि यावद्दण्डचक्रादिसामग्र्येण विनाश्यते, तावत्समवधानेनाकाशाभावेऽपि घटस्यासत्त्वमिति न तत्साध्यत्वम् । आकाशादेश्च प्रागभावाभावेन तद्विनाशकसामग्रीसमवधानाभावान्न दण्डादिसाध्यत्वप्रसङ्गः । तमोरूपाकाशप्रागभावभावेऽपि वात्मन एव तद्विनाशतया तव तत्सामग्रीसमवधानानुपपत्तेश्च । दुःखप्रागभावस्य च प्रागभावान्तराभावेऽपि तस्यैव तन्निरूपितप्रतियोग्यनुयोगिभावसम्बन्धाश्रयतया तद्विनाशात्मकदुःखजनकविहिताकरणादिसामग्रीसमवधाने प्रायश्चित्ते सति सत्त्वम् असति चासत्त्वमिति तत्साध्यत्वमुपपन्नम् । साध्यत्वाभिमतानर्थनिवृत्तिरूपस्य चात्मनो न प्रागभावोऽस्ति, अनादित्वात् । अनर्थस्यैव वा तदभावतया आत्मन एव तन्नाशत्वेन च तन्नाशकसामग्र्यप्रसिद्धश्च । तत्त्वज्ञानस्यैव च तन्नाशकसामग्रीत्वोपगमेन तत्समवधाने तत्त्वज्ञानाभावे तदसत्त्वमिति दुर्वचत्वाच्चेति वदन्ति ॥

---

## अविद्याद्यनर्थनिवृत्तेर्ब्रह्मविद्यासाध्यत्वम् ।

अत्राभिधीयते — आत्मा तावत् 'प्रपञ्चोपशमः शिवोऽद्वैत आत्मैवे'ति श्रुतेरनर्थनिवृत्त्यात्माधिगम्यते । उपशमशब्दस्य भावार्थवृत्तिलाघवेन वर्तिपदार्थप्राधान्यलाभेन च प्रपञ्चस्योपशम इत्येव तदर्थावगमात् । उपशाम्यत्यस्मिन्नित्युपशम इत्यधिकरणविवक्षायां प्रपञ्चस्येति न सङ्गच्छेत । समर्थो हि पदविधिः । न च प्रपञ्चाकाङ्क्षोपशमाधिकरणस्यात्मनः, नाप्युपशमस्य, पृथगनुपस्थानात् । प्रपञ्चस्योपशमो यस्मिन्निति कथञ्चन सम्भवतोऽपि व्यधिकरण-

बहुव्रीहेरन्यपदार्थवृत्तिगौरवहतत्वाच्च । न च 'षोडशकलाः पुरुषं प्राप्यास्तं गच्छन्ती'ति पुरुषे कलाप्रलयोऽतिरिक्तो गम्यते, पुरुषपरिशेषतया स्वरूपेण-तद्दर्शनमात्रपरत्वात् । 'गताः कलाः पञ्चदश प्रतिष्ठाः

"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति',

इति कलाविलयस्य परमात्मपरिशेषत्वश्रवणाद्, 'यत्र त्वस्य सर्वमात्मैवाभू-दि'त्यादिश्रुत्यन्तराच्च । सर्वत्रैव प्रतियोग्यपेक्षया भावान्तरस्यैवाभावव्यवहारप-दत्वोपपत्तौ निरुपाख्यरूपाभावकल्पने मानाभावाच्च । न च तस्य तन्निवृत्तेश्चै-ककालत्वविरोधः, तत्र वादिसम्प्रतिपन्नोदाहरणासिद्धेः । घटादेरपि कपालादि-रूपस्वनिवृत्तिसहभावोपगमात् । न चैवं निवृत्तिकादाचित्कव्यवहारानुपपत्तिः, अन्वयव्यतिरेकाभ्यामन्यतो वा नाशकत्वाभिमतसामग्रीसमवधानस्य वावस्था-भेदस्य वा तत्तद्व्याप्येतरयावत्तदुपलम्भकसमवधाने सत्युपलब्धोपाधावनुपलब्धेर्वा तद्व्यवहारोपाधित्वोपगमात् । तदवच्छेदेनैव च तत्तन्निवृत्तिविरोधव्यवहारस्याप्यु-पपत्तौ मुक्तावप्यनर्थानुवृत्तेरप्रसञ्जनीयत्वात् । विपर्यासात्मनोऽनर्थस्य वस्तु-तत्त्वावभासे सति प्रसञ्जकाभावाच्च ।

तदेवं ब्रह्मणोऽनर्थनिवृत्तिरूपत्वे प्रामाणिके तस्याश्च 'तरति शोकमात्मवि-दि'त्यादि श्रुतं ज्ञानसाध्यत्वं न तर्काभासेनाभासयितुं युक्तम् । श्रुतानुगुणतर्कोप-पत्तेः । तथाहि —

भावेन वा विशेषेण वस्तूनां साध्यता द्विधा ।
घटं करोति जानीत इति तुल्यवदन्वयात् ॥

यथा च यस्य साध्यत्वं तथा साधनसङ्गतम् ।
अन्वयव्यतिरेकाभ्यां तत्साध्यमुपपाद्यते ॥

निरविद्यावभासं च ब्रह्म ज्ञानेन साध्यते ।
ज्ञानासत्त्वे तथासत्त्वमेव तस्य ह्यविद्यया ॥

वस्तुतस्तु यदि व्यतिरेके नियमनिवेशः, दुःखानुत्पादो न प्रायश्चित्तसाध्यः स्यात् । आप्रारब्धविपाकावसानादप्रायश्चित्तेऽपि दुःखानुत्पादासत्त्वनियमाभावात् । न च पापध्वंस एव तत्साध्यः, विधेराहत्य पुरुषार्थफलस्वरसत्वात् । योऽपगुरातै शतेन यातयादि'ति ब्रह्मवधोद्यमनादेः दुःखविशेषफलत्वेऽवगते तन्निमित्तवि-धेयप्रायश्चित्तस्य सन्निहितपरिजिहीर्षितदुःखानुत्पादफलत्वौचित्याच्च । नान्तरी-

यकतया तु धर्मभेदो दुरितध्वंसश्च साध्यत इति । अपिच यस्मिन् सत्यग्रिमक्षणे सत्त्वमेव नासत्त्वमपीत्यत्रैव नियमोऽस्तु । व्योमादेश्च दण्डादौ सत्यसत्त्वमपीत्यनतिप्रसङ्गात् । एवं च दुःखानुत्पादस्यात्ममात्राविद्यानिवृत्तेश्च प्रायश्चित्ततत्त्वज्ञानसाध्यत्वमुपपन्नम् । एवं यस्य यस्मिन् सत्येव सत्त्वमेवेतीयत एव लाघवेन प्रवृत्त्यङ्गत्वोपपत्तौ गौरवेण साध्यत्वाभिमतेत्यादेरनाश्रयणीयत्वात् । न चैवमपि मिथ्यानर्थनिरूप्यतया ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गः, रज्जुसर्पविसर्पणादिवत् तन्निरूप्यैकसत्ताकत्वाभावात् । न खलु मुक्तावनर्थनिवृत्तिरूपावभासं ब्रह्म, आनन्दसत्तामात्रावभासत्वोपगमात्, प्रवृत्त्यङ्गतया तु तत्त्वज्ञानसाध्यता परमनर्थनिवृत्त्यात्मना निरूप्यते । तद्रूपविपर्यासश्चानर्थप्रतिभासापेक्षो मोक्षे वस्तुतत्त्वावभासे न सम्भवतीति । किमेवमनर्थनिवृत्तिसाध्यत्वभ्रमादेव तत्त्वज्ञाने मुमुक्षुरधिक्रियताम् । अत्यल्पमिदमनुयुज्यते, सर्वत्रैवाधिकारस्याविद्यामूलत्वात् । तथाच भगवान् भाष्यकारः—

**"अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि च"**

इति । अत एव ज्ञानसाध्यत्वेऽपि साधनाधीनत्वक्षयित्वाद्यापादनं निरस्तम् । सत्तया साध्यत्वानुपगमात् ।

तत्त्वतस्तु अविद्याद्यनर्थस्य बाध एव । तत्त्वज्ञानेन यावद्विपर्यस्तरूपनिषेधमयेन वस्तुतत्त्वपरिशेषो वा वस्तुतत्त्वावभासेन विधिनिषेधाभ्यामवभासानर्हत्वं वा बाधो नाम । तत्र किं केन साध्यते । किमर्थं तर्हि तत्त्वज्ञानमिष्यते । समूलसंसारानर्थानवभासाय । ननु सोऽपि नित्यसिद्धस्वरूपावभास एव । सत्यम् । स एव तु आ तत्त्वज्ञानादविद्ययैवानर्थविपर्यासादसिद्धवद् विकल्प्यते मानर्थमनुभूवं तत्त्वज्ञानेनेति । तावतैव प्रवृत्तिरुपपद्यते ॥

---

**परमते ब्रह्मविद्यासाध्येऽनुपपत्तिः ।**

अन्यथा परस्यापि किं ब्रह्मविद्यया साध्यताम् । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिरिति चेत् । उपायो भक्तिरुपेयं ब्रह्मेत्युपगमविरोधः । अपिचांशांशितया शरीरशरीरितया चात्मनो नित्यैव ब्रह्मसम्पत्तिरिति सा न

साध्या । अर्चिरादिगत्या लोकभेदाप्तिश्च नोद्देश्या, विद्याया अमृतत्वफलाम्नायात् । अत एव स्वसम्बन्धेन भगवदनुग्रह इति निरस्तम् । तत्र ब्रह्मस्वरूपगुणविभवसाक्षादनुभव इति चेद्,

"ननु हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥"

इति ते मतम् । अत एव स्वेन रूपेणावबोधादिगुणेनाभिनिष्पत्तिरपि व्याख्याता । अथाभिनिष्पत्तिराविर्भावः, कः खल्वसौ विद्यया साध्यते । ज्ञानकामादयो हि सन्तः स्वयमुद्भूतस्वभावा एव । युगपत् सर्वविषयता यत्नान्तरमन्तरा विषयसिद्धिपर्यन्तता चावस्थाभेद इति चेत् । स यद्यागन्तुः, स्वेन रूपेणेति विशेषणविरोधः । अथ स्वभावः, न साध्यो विद्यायाः । हेयगुणावरणध्वंस एवेति चेत् । ते हेयगुणा यद्यात्मनो यदि वा ज्ञानस्यैवावस्थाभेदाः, उभयथापि तत्तदवस्थान्तरमेव ध्वंस इति किमिह तन्निरुच्येत यद् विद्यया साध्येत । लिङ्गादिभङ्गः प्रकृतेरवस्थान्तरं साध्यत इति चेत् । क एवं सति पुरुषस्यार्थः । न हि तदवस्था सा मुक्तस्याप्राक्तनोऽपि स इति सर्वसिद्धम् । न चायं प्रकृतिवशी, 'जगद्व्यापारवर्जम् —' (ब्र० ४. ४. १७) इति हि सूत्रितम् । तस्मान्नित्यसिद्धस्वरूपस्यैव बन्धनिवृत्त्या साध्यत्वभ्रमादेव तत्त्वज्ञाने प्रवृत्तिरित्यकामेनापि स्वीकरणीयमिति ॥

---

### सर्वात्मभावे दोषपरिहारः ।

अत एवैवं ब्रह्मात्मविद्ययाविद्याद्यनर्थबाधेन स्वरूपप्रतिष्ठाकैवल्ये सर्वात्मभावनिबन्धनाखिलानर्थसम्बन्धसङ्कटशङ्कापि[1] न युक्ता । न हि 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती'ति सर्वचिदचिद्रूप एव भवतीत्युच्यते, 'यत्र त्वस्य सर्वमात्मैवाभूदि'त्यादिविरोधात् । किन्तु स्तिमितगम्भीरसत्तामात्रपरिशेषो भवति । सा हि सर्वस्य चिदचिद्भेदविकल्पस्यात्मेति । अत एव भाष्ये 'जीवस्येश्वरांशत्वे तदीयसंसारदुःखेनांशी ईश्वरोऽपि दुःखी स्यात् । ततश्च तत् प्राप्तानां महत्तरं दुःखं स्यात्, सर्वजीवदुःखसम्बन्धात् । तद्वरं प्रागवस्थः सार एवास्त्विति जीवेश्वररूपानपवादेनैव ब्रह्मभावं ब्रह्मविद्याफलं मन्वानस्य

---

१. 'पि यु' क. पाठः.

शङ्कामनूद्य समादधे — 'प्रकाशादिवन्नैवं परः' (ब्र० २. ३. ४६) इत्यत्र जीवस्य हि शरीराद्यभिमानप्रयुक्तो दुःखसम्बन्धः । ईश्वरस्य च तदभिमानाभावात् तदभावः । ननु सोऽप्यभिमान ईश्वरस्यैव स्यात् । न । अविद्ययैव तत्सम्भिन्नजीवरूपव्यावृत्त्युपपत्तेः । न खलु गगनव्यापिनः प्रकाशस्याङ्गुल्याद्युपाधिक ऋजुवक्रादिभाव , किन्तु तदुपाधिसम्बन्धपरिच्छिन्नस्यैव । तथा नाखण्डस्यैव कालस्य वर्तमानादिभावो लवत्रुटिनिमेषादिभावो वा, किन्त्वौपाधिकरूपभेदस्यैव । नवा नलकादौ तदनुवृत्तदीर्घत्वादिराकाशमात्रस्य, किन्तूपाधिविच्छिन्नरूपभेदस्यैव । न तु साङ्कर्यम् । तद्वदिति । यदा पुनरखिलभेदापवादेन प्रकाशानन्दसत्तामात्रपरिशेषः कैवल्यमुपगम्यते, तदा तदनर्थगन्धस्याप्यसम्बन्धात् सुतरामेव पुरुषार्थ इति । तदर्थं निर्विशेषब्रह्मात्मतत्त्वसाक्षात्काराय विवेकादिसाधनसम्पत्त्यनन्तरं तत एव हेतोर्ब्रह्ममीमांसारब्धव्येति प्रतिपद्यते भगवान् सूत्रकारः 'अथातो ब्रह्मजिज्ञासा' (ब्र० १. १. १) इति ॥

---

## ब्रह्मविचारप्रतिज्ञासमर्थनम् ।

अथ कथं ब्रह्मविचारारम्भः प्रतिज्ञायेत । 'अचिन्त्यमव्यपदेश्यमि'ति हि श्रूयते । ननु 'श्रोतव्यो मन्तव्य' इति च श्रूयते । विषयव्यवस्था तर्हि वक्तव्या । सविशेषविषयो विचारविधिरिति चेत्, कथं पुनरन्यद् विचार्यते अन्यच्च निर्विशेषं विज्ञायते । निर्विशेषात्मावगतिश्च परमपुरुषार्थः । अथैतत् स्यात्— निर्विशेषमेव ब्रह्म मायया सविशेषमिति तदालम्बनो विचारोऽदूरविप्रकर्षेण निर्विशेष एव पर्यवस्यति निर्धूमत्वविषयतर्क इव पर्वतस्य वह्निमत्त्वे कथमपि सम्बन्धोपपत्तेरिति । नैतत् स्यात् । एवं सति निर्विशेषासिद्धिप्रसङ्गात् । विचारानुग्राह्यमानस्यापि सविशेषविषयत्वापातात् । तस्यैवं च शास्त्रयोनित्वन्यायेन 'नैषा तर्केण मतिरापनये'त्यादिश्रुतेरुपदेशानपेक्षौत्प्रेक्षिकविचारागोचरत्वमचिन्त्यत्वं स्यादिति ।

इदं तु स्यात् । निर्विशेषावगतिपर्यवसायी विचार आरिप्सितो न निर्विशेषालम्बन एव, इदमेवमनेन वेत्यादि तद्रूपविरोधात् । तथा च तात्पर्यलिङ्ग-

---

१. 'व शा' ख. पाठः.

निरूपणेनाहत्य वेदान्त एव विचारविषयः स्यात्। यथा तावद् 'जन्माद्यस्य यतः' (ब्र० १. १. २) इति जन्मादिवाक्यं लक्षणमुखेन ब्रह्मावगमयेद् न वेति। यथा वा 'शास्त्रयोनित्वात्' (ब्र० १. १. ३) इति 'छन्दांसि जज्ञिरे तस्मादि'त्यादिवाक्यं शास्त्रकर्तृत्वेन ब्रह्म प्रतिपादयेन्नवेति, शास्त्रं वा ब्रह्मणि प्रमाणं न वेति च। तथा 'तत् तु समन्वयात्' (ब्र० १. १. ४) इति वेदान्ता ब्रह्म समनुयन्ति न वेति। तथा 'ईक्षतेर्नाशब्दम्' (ब्र० १. १. ५) इति 'सदादिवाक्यं जगत्कारणतया ब्रह्म प्रतिपादयति उत प्रधानमनुवदतीत्यादि। तद्वारा तु ब्रह्मापि कथञ्चिद् विषय इति ब्रह्ममीमांसेत्युच्यते। अथवा पूर्वपक्षोत्प्रेक्षितरूपविरोधिस्वरूपोपलक्षणविशेषालम्बनो विचारः स्यात्। यथा लक्षणाभावादशक्यप्रतिपत्ति निर्विशेषं ब्रह्मेति प्राप्ते तद्विरोधिरूपोपलक्षणकारणत्वसत्यज्ञानादिलक्षणवत्त्वमुपपाद्यते। यथा वा सर्वस्यापि प्रमाणस्य शब्दस्य च विशिष्य सविशेषवस्तुविषयत्वान्निर्विशेषं ब्रह्माशक्यावगममिति प्राप्ते स्वरूपसत्तामात्रवृत्त्या सामानाधिकरण्यस्य शास्त्रप्रमाणकं तदुपपाद्यते। अथापि फलाय भूतं भव्यार्थमुपदिश्यत इति सविशेषमेव शास्त्रप्रमाणं स्याद् न निर्विशेषमिति प्राप्ते तदवगतेरेव परमपुरुषार्थतया तदेव समर्थ्यते। एवमन्यत्रापि निर्विशेषविषये चानन्दमयाधिकरणे जीवरूपव्यावर्तककारणधर्मेण निर्विशेषोपलक्षणमेवाभिप्रेतं 'नेतरोऽनुपपत्तेः' (ब्र० १. १. १६) इति। जन्मादिसूत्रे तस्य तदुपलक्ष्यत्वव्यवस्थानात्। अत एव आत्ताधिकरणे* सकलसंहर्तृत्वालिङ्गेन निर्विशेषमेव निर्णिनीषितम्। तद्विषये क इत्था वेद यत्र सोऽत्चेति तदधिष्ठानोपदेशात्। एवं सर्वत्र ज्ञेयविषये कारणरूपोपन्यासे जीवरूपव्यावृत्त्या साक्षाद् वा तदुपलक्षणाभिप्रायः सूत्रकृतोऽनुसर्तव्यः। एवं भेदव्यपदेशादिसूत्रमपि तत्र तत्र जीवरूपव्यावृत्त्या निर्विशेषोपलक्षणाभिप्रायमेव गमनीयमिति॥

---

### अधिकरणपूर्वपक्षः।

एतावानत्राधिकरणार्थसङ्क्षेपः। ब्रह्मजिज्ञासा वेदान्तमीमांसात्मिकारब्धव्या न वेति संशयः। तदर्थं च तत्प्रयोजकं सम्भवति न वेति। तथा विशिष्टाधिकारिविषयप्रयोजनानि सम्भवन्ति न वेति। तत्र तावत् प्राप्तं नार-

---

* 'अत्ता चराचरग्रहणात्' (ब्र० १. २. ९)

ऽधथ्येति । तत्र न तावदापाताधिगतफलवदर्थनिर्णयरागो विविदिषितविचारस्य प्रयोजकः, लौकिके तत्र विहितप्रव्रज्याद्यनपेक्षाप्रसङ्गात् । नापि स्वाध्यायविधिः, अक्षरावाप्त्यवसानतया तस्यार्थज्ञानफलविचाराप्रयोजकत्वात् । अन्यथा विचारस्याप्युपनीतमात्राधिकारित्वे प्रव्रज्याद्यङ्गविधिविरोधात् । नाप्युपासनविधिः । आरोपेणापि सम्भवतस्तस्य विषयसिद्धिफलविचाराप्रयोजकत्वात् । नचापेक्षितफलरूपतया ब्रह्मणः स विचारं प्रयुञ्जीत, नित्यसिद्धात्मभूतस्य नियोगफलत्वायोगाद्, ब्राह्मलौकिकभोगैश्वर्यफलत्वोपपत्तेश्च । न च श्रवणविधिरस्ति, सम्प्रतिपन्ने निदिध्यासनविधौ तत्स्वरूपोपकारितयार्थप्राप्तत्वात् । अपिच स न तावदपूर्वविधिः, विचारे विचार्यनिर्णयहेतुताया लौकिकत्वात् । विचार्यस्य साक्षात्कारयोग्यत्वे च तद्धेतुत्वस्यापि रत्नतत्त्वगान्धर्वपरीक्षादौ सिद्धत्वात् । नापि नियमविधिः, विचारस्य फलान्तरे वा ब्रह्मसाक्षात्कारे साधनान्तरस्य वा अप्राप्तेरनियमनीयत्वात् । अत एव न परिसङ्ख्यापीत्यादि दिक् । तथा न तावद् ब्रह्मविचारे कर्माधिगमो निरपेक्षाधिकारहेतुः, शौचादेरिव तस्य स्वरूपेणाधिकारिविशेषणत्वे मानाभावात् । ब्रह्मविचारप्रभृतिकर्मानुष्ठापकतयेति चेद् । न । तदनुपयोगात् कर्मणामसन्निपातित्वात् । आरातीयत्वे च 'न कर्मणा न प्रजये'त्यादिविरोधात् । भावान्तरकृतानामपि दुरितनिवृत्त्या विचारादिप्रयोजकत्वोपपत्तेश्च । कर्मफलानित्यत्वादिज्ञानेन विरञ्जकतयेति चेद् । न । काम्यविधीनामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् । तत्र सुकृतविशेषापेक्षायां च स एवाधिकारहेतुरस्तु । न च सोऽपि, दुर्ज्ञानत्वेन तस्य विचारप्रवृत्त्यप्रयोजकत्वात् । विवेकवैराग्यादिना तदनुमानमिति चेत्, तस्यावश्यकत्वात् तदेवाधिकारिविशेषणमस्तु । न च तदपि, नित्यानित्यविवेकादेरुभयमीमांसासाध्यत्वेन प्रथमं तदसम्भवात् ।

तथा न तावदस्य कारणात्मा विषयः, तद्रूपस्य कार्यादिलिङ्गत्वेन वेदान्ताप्रतिपाद्यत्वात् । तज्ज्ञानस्य भेदगर्भतया 'उदरमन्तरं कुरुते अथ तस्य भयं भवती'त्यनर्थहेतुत्वाच्च । नापि प्रत्यगात्मात्मतया तदुपासननियोगः । 'अथातो धर्मजिज्ञासा' (जै० १. १. १) इत्येव सिद्धे पृथगारम्भवैयर्थ्याद्, लक्षणादिभिर्ब्रह्मस्वरूपोपपादनविरोधाच्च । तात्पर्याभावाद् विषयद्वारा ज्ञानविधिरुपपादनीय इति चेद् । न । चेष्टात्मिका हि क्रिया निर्विषया नोपपद्यत

इत्याज्यं दधि पयः पुरोडाशः सोम इत्युपहृत्योपपाद्या। ज्ञानक्रियायास्तु विषयसत्तामनपेक्ष्य 'वाचं धेनुमुपासीते'त्यादिवदारोपेणाप्युपपत्तेरविषयोपपाद्यत्वात् । वैधफलस्य स्वर्गादिवदनित्यत्वादिनियमेन नित्यनिरतिशयफलप्रेप्सोरनधिकारप्रसङ्गाच्च। नापि प्रत्यगेकरसं ब्रह्म, सर्वमानविरोधेन तदसिद्धेः, तस्य जगत्कारणत्वादिलक्षणायोगेन विचार्यत्वायोगाच्च । प्रतीचोऽहमित्येव स्वसिद्धतया तदेकरसस्याजिज्ञास्यत्वाच्च । नचानहमात्मा, पराक्त्वाद् घटादिवत् ।

तथा न तावद् ब्रह्मलोके ब्रह्मोपसम्पत्त्या सत्यकामसत्यसङ्कल्पादिस्वरूपाविर्भावः प्रयोजनम् । मुक्तस्यालिङ्गत्वे भोगार्थकामसङ्कल्पादेरयोगात् । अन्यथा सशरीरस्यानर्थनियमेन मुक्तेरपुरुषार्थत्वप्रसङ्गात् । नाप्यविद्याद्यनर्थनिवृत्तिः, आत्मातिरेके तस्या दृश्यत्वादिभिरनिरूप्यत्वात् । कल्पनामात्रस्य चापुमर्थत्वात् । आत्ममात्रत्वे च विशेषाभावेनाप्रयोजनत्वात् । तस्मात् प्रयोजकाभावादधिकार्याद्यभावाच्च वेदान्तानामर्थवादनयनेयत्वाद् न ब्रह्मजिज्ञासारब्धव्येति पूर्वः पक्षः ॥

---

## अधिकरणसिद्धान्तः ।

राद्धान्तस्तु श्रवणविधिरेव तावद् विचारं प्रयुञ्जीत । निदिध्यासनस्वरूपोपकारितयार्थप्राप्तस्यापि फले तदङ्गकस्य विधिसम्भवात् । निर्विशेषात्मपरेऽपि वेदान्ते वेदानुवचनादिविधिवद् विचारविधाववान्तरतात्पर्योपपत्तेश्च, तदवगमायोपजीव्यत्वात् । यद्यपि निर्विशेषात्मविषयो विचारविधिः, तथापि नेदानीमविचिकित्सं तदपरोक्षज्ञानमधिकारिणः, न वात्यन्तिकी तदप्रतिपत्तिः, येनोभयथापि विधिर्न प्रतिपद्येत । अधीतमात्रापाताधिगतो ह्यात्मेति तद्विचारविधिप्रतिपत्तिरुपपद्यते । अविचारसाध्यनिर्विचिकित्सात्मापरोक्षतः प्रमातृत्वाद्यारोपानुपमर्दात्, तादृगात्मापरोक्षं च कर्तृत्वाद्यनर्थोपमर्दीति ।

स च तावदपूर्वविधिरस्तु । ब्रह्मसाक्षात्कारफलेऽप्राप्तत्वात् । न हि विचारत्वेन विचार्यसाक्षात्कारत्वेन हेतुहेतुमद्भावः प्राप्तः, धर्मादिविचारे व्यभिचारात । नापि साक्षात्कारयोग्यार्थविचारत्वेन[1] विचार्यसाक्षात्कारत्वेन[2] च,

---

1. 'न तत्साक्षा', २. 'त्वे च न गा' ख. पाठः.

गान्धर्वविचारादावेव व्यभिचारात् । नापि ब्रह्मविचारत्वेन तत्साक्षात्कारत्वेन च तत्प्राप्तिः । व्यभिचारादेव । तथाच लिङ्गं 'शृण्वन्तोऽपि बहवो यं न विद्युरि'ति । अविचारेऽपि वामदेवादेरात्मसाक्षात्काराच्च । तथा च श्रुतिः 'गर्भे एव सन् वामदेवः प्रतिपेदे' इत्यादिः । कथं चेह प्रतिबन्धकमन्यजन्मविचारश्च व्यभिचाराय कल्प्येत, यदि मानान्तराभावे सत्यतो विचारविधेरनयोः साध्यसाधनभावो निगम्येत । अधिगतनिर्वाहाय हि कल्पनेत्यतोऽयमप्राप्तविषयत्वादपूर्वविधिः स्यात् । नियमविधिर्वा । नियन्तव्यानि च मनःप्रभृतीन्युपपादितानीति दिक् ।

मीमांसामनपेक्ष्यैव 'तद् यथेह कर्मचितो लोकः क्षीयते', 'ब्रह्मविदाप्नोति परमि'त्याद्यधीयानस्योत्कटतमसम्भावनात्मकनित्यानित्यविवेकादिरधिकारश्चोपपादितः । विषयश्च निर्विशेषं प्रत्यगेकरसं ब्रह्म, 'तत् त्वमसि' इत्यादिसामानाधिकरण्यात् । मानान्तराणामविद्यारोपितविषयत्वेन तदविरोधाज्, जगत्कारणत्वस्य च मायिकस्यैव तदुपलक्षणमात्रत्वोपगमेन विचार्यत्वोपपत्तेः । प्रकाशसत्तामात्रप्रत्यगेकरसस्यापि ब्रह्मणो नैसर्गिकाविद्याहमादिविपर्यासावभासस्य स्वरूपेण जिज्ञास्यत्वोपपत्तेः । तदिदं विषयविषयिणो(र)न्योन्यात्मकताद्यध्यासोपपादनेन दर्शितं भाष्ये । न चाहमात्मा व्यतिरेकविकारादिभिरित्युक्तं, द्रष्टृत्वं दृश्यत्वं च प्रत्यक्त्वपराक्त्वप्रयोजकमिति च । अविद्यावरणं च तस्य प्रकाशात्मनो नाभावप्राप्तिः, येनात्यन्तासिद्धं न जिज्ञास्येत । किन्तु बुबोधयिषितस्वरूपेण नास्ति न प्रकाशत इति व्यवहारयोग्यतापत्तिः । सा च वि(प)र्यस्तावभासेऽपि सम्भवतीति शक्यं जिज्ञासितुम् । तदिदं 'तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वे'त्यादिना विमृश्य दर्शितं भाष्ये । प्रयोजनं च विद्ययाविद्याद्यनर्थबाधेन प्रकाशानन्दसत्तामात्रपर्यवसानम् । प्राक् च विपर्यस्तरूपावभासादविद्यामयी विद्यायार्थितेति[1] चोपपादितम् ।

ननु स्ववृत्तिसुखापरोक्षं पुरुषार्थः, न लाघवेऽपि सुखापरोक्षमात्रम्, ईश्वरस्यापि संसारिसुखदुःखापरोक्षभावेनार्थानर्थसम्बन्धप्रसङ्गादिति चेत् । मैवम् । भेददर्शनदशापन्नार्थानर्थत्वे विशेषापेक्षायामप्यर्थानर्थत्वमात्रे लाघवेन सुखाद्यपरोक्षत्वस्यैव प्रयोजकत्वात् । नन्वनुकूलवदनीयं सुखमानन्दसत्तामात्रात्मा च कस्य स्यात् । एवं हि प्रत्यगात्मा स्वयमानन्दो न स्यात् । न वान-

१. 'याम' ख. पाठः.

न्यशेषतया प्रेमगोचरः । तद्भेदारोपेण तस्यानुकूलवेदनीयत्वमुपलक्षणमेषितव्यम् । एवं च विद्यापोदितसर्वभेददर्शनस्य स्वरूपानन्दापरोक्षात्मतैव परमपुरुषार्थ इत्यनवद्यम् ।

तस्मात् प्रयोजकविशिष्टाधिकारिविषयादिभावाद् ब्रह्मजिज्ञासारब्धव्येति ।

कश्चिदाह — ब्रह्ममीमांसा नारम्भणीया व्यवहारमूलव्युत्पत्तेः कार्यविषयतया शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावेन वेदान्तानां ब्रह्मण्यप्रामाण्यादिति पूर्वः पक्षः । सिद्धान्तस्तु अम्बातातमातुलचन्द्रादिशब्दांस्तं तमर्थमङ्गुल्या निर्दिश्य निर्दिश्य बाला व्युत्पाद्यमाना दृश्यन्त इति सिद्धेऽपि व्युत्पत्तिसम्भवाद् वेदान्तानां ब्रह्मणि प्रामाण्योपपत्तेरारम्भणीया सेति ।

तन्न । धर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इत्यक्षरार्थमुक्त्वा सिद्धवस्तुव्युत्पत्तिसम्भवाद् ब्रह्मविचारः कर्तव्य इति वचनव्याघातात् । अथ 'अथातो धर्मजिज्ञासा' (जै० १. १. १) इत्यत्राध्ययनानन्तरं तत एव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा आचार्यकारकत्वादध्ययनस्य स्वर्गार्थत्वाद् वा न धर्मविचारः कर्तव्य इत्याक्षिप्य तथाप्यन्तरालेऽर्थावबोधाधिकारकल्पनादर्थावबोधदृष्टफलत्वोपपत्तेर्वा धर्मविचारः कर्तव्यः इति सिद्धान्तितम् । एवमिहाप्यक्षरार्थतात्पर्यार्थभेदादुपपत्स्यते । अथ तत्र धर्मविचारेऽध्ययनमहेतुः स्वनियोगनिर्वृत्तिमात्रार्थतया वा स्वर्गार्थतया वा अन्यथासिद्धेरिति तद्धेतुत्वाक्षेप इत्युच्येत, इहापि तर्हि तथैव भविष्यति । कर्मविचारे हि सति कर्मफलाल्पास्थिरत्वनिर्णयविशिष्टानन्तस्थिरफलापातप्रतीतिर्ब्रह्मविचारे विशिष्टो हेतुः । अन्यथा कर्मफलाद् निर्वेदायोगाद्, अलाभे मत्तकाशिन्या इति न्यायेन तावन्मात्रतृप्त्यापत्तेश्च । तत्र तदापातप्रतीतिः समीक्ष्य परिचिन्तने सम्भावितप्रामाण्याप्रवृत्तिहेतुः । शब्दस्य सिद्धशक्त्यभावनिश्चये च ब्रह्मवेदनमनन्तास्थिरफलमिति प्रतीतिरसम्भावितप्रामाण्या न प्रवृत्तिहेतुरिति हेतुत्वाक्षेपपर्यवसानादिति चेत् । नैवम् । एवमपि कर्मविचारो यदंशेन प्रवृत्तिहेतुः, ब्रह्मविचारे तदंशेन तद्धेतुत्वानाक्षेपात् । न हि वेदान्तानां कार्यार्थत्वानिर्णयः कर्मफलाल्पत्वादिनिर्णयविरोधी, ब्रह्मवेदनानन्तास्थिरफलत्वप्रतीतौ वेदान्ताधीनाया तदंशेन कर्मविचारस्याहेतुत्वात् । अथ यावत् कर्मविचारमननुद्धृत्य स एव विशिष्टो

१. 'रकाधिकात्वाध्य' ख. पाठः.

हेतुराक्षिप्येत, तदेव कर्मविचारानन्तरं तत एव हेतोरित्यक्षरार्थानानुगुण्यं प्राप्तम् । एवं तु स्यात् । न कर्माण्यल्पास्थिरफलानि 'अनन्तं ह वा अपारमक्षय्यं लोकं जयति योऽग्निं नाचिकेतं चिनुते' इत्यादिशास्त्रात् पुण्यचितो लोकः क्षीयत इत्यादि च न सिद्धं कर्मफलक्षयित्वं शक्नोति बोधयितुम् । शब्दस्य कार्यार्थत्वात् । अतः कर्मविचारो वृत्तोऽपि न ब्रह्मविचारहेतुरिति । नैवं स्यात् । सिद्धशक्त्या शाब्दः कर्मफलाल्पत्वाद्यधिगमो ब्रह्मविचारहेतुरिति सिद्धान्तापत्तौ कर्माधिगमहेतुत्वस्यैव हानापत्तेः । वृत्ते कर्मविचारेऽन्यानर्थक्यबहुल्पकर्माभ्यासविधिभिरार्थस्य कर्मफलाल्पत्वाधिगमस्य ब्रह्मविचारहेतुत्वं हि परेण वाच्यम् । नचेदं शब्दस्य सिद्धशक्त्यभावेऽपि हीयते । अपिच ब्रह्मज्ञानकार्यार्थेऽपि वेदान्ते* देवताधिकरणन्यायेन विधिशेषतयापि स्वर्गादिवद् मानान्तराविरुद्धे ब्रह्मज्ञानानन्तफलत्वादौ प्रतीतिः सम्भावितप्रामाण्यैव प्रवृत्तिहेतुः स्यात् । तथा च स्वयमेव सिद्धान्ते दर्शितं कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव, प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन 'ब्रह्मविदाप्नोति परमि'त्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवद् रात्रिसत्रप्रतिष्ठावदपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धे'रिति । तस्मान्नास्ति पूर्वः पक्षः ।

नापि सिद्धान्तः । सिद्धशक्तिसाधनेन हि ब्रह्मज्ञानानन्तफलत्वप्रतीतिप्रामाण्यसम्भावनाधातव्या । न च सा शक्या । 'ब्रह्मविदाप्नोति परम्' इत्यादेः कामान्नित्वादिपर्यवसानशङ्कासम्भवात् । 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवती'त्यादिव्यतिरेकेण विदित्वा जुह्वतः कर्मानन्तफलत्वस्याप्यवगमादन्यतिरेकासम्भावनया तत्प्रामाण्यसम्भावनाशैथिल्यात् । अपिच रागत एव ब्रह्मविचारप्रवृत्तिरिति ते मतम् । तथाच कार्यार्थत्वशङ्कावसन्नतद्रागोत्तम्भनमेव सिद्धशक्त्युपपादनफलमिति तद्विषयं जिज्ञासासूत्रमिति फल्गुफलमापादीत्यलं मशके पाशुपतास्त्रप्रयोगेण ।

तस्माद् यथावर्णितमेवाधिकरणशरीरं शुद्धमिति सिद्धम् ॥

---

१. 'रा' क. पाठः.

---

* 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र०. १. ३. २६)

वाचालयति यः सर्वं सर्वभूतगुहाशयः ।
वासुदेवो निबन्धं मे स क्षमात्मा समीक्षताम् ॥

प्रगल्भन्ते येषां प्रकृतिमुषिताशेषकलुषा
धियः शास्त्राम्भोधौ जगति ऋजवस्ते कतिपये ।
ममामीषामञ्चन्मतिमुकुरबिम्बेषु महतां
निबन्धः सन्धत्तामनिशमनुबिम्बव्यतिकरम् ॥

सन्तो ये गुणयन्ति दोषमपि ते दूरे गिरां मादृशा-
मञ्च्यन्ते सुजनेषु तेऽपि सगुणं दोषं विविञ्चन्ति ये ।
ये केचिद् गुणदूषणव्यसनिनस्तेभ्यः स्पृहा नः परं
यैराघ्रातमशेषतो गुणतया मान्येत मन्दैरपि ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्यश्रीभगवद्रामभद्रानन्दसरस्वतीश्रीगुरुचरण-
परिचरणावाप्तविद्येन श्रीवासुदेवानन्दसरस्वतीश्रीचरणप्रसादित-
पारिव्राज्येन श्रीकृष्णानन्दयतिवरेण विरचिते
सिद्धान्तसिद्धाञ्जने जिज्ञासासूत्रविवर-
णलिपिः प्रथमा ॥

---

चतुर्थो भागः ।

---

शुभं भूयात् ।